श्रीरस्तु ।

# षड्दर्शनम् ।

श्रीमन्महर्षिजैमिनिगौतमकणादकापि-
लपतञ्जलिव्यासप्रणीतम् ।

तदिदम्-
श्रीकृष्णदासात्मज-गङ्गाविष्णुना
स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९८२, शकाब्दाः १८४७.

कल्याण-मुंबई.

१ द्वौ योगौ द्वेच मीमांसे द्वौ तर्काविति षड् बुधाः ।

# भूमिका.

प्रसिद्धानि दर्शनान्यास्तिकनास्तिकमतभेदेन क्रमशश्चार्वाकमाध्यमिकयोगाचारसौत्रान्तिकवैभाषिकजैनश्रीमन्महर्षिगौतमकणादजैमिनिपतञ्जलिकपिलव्यासकर्तृकाणि द्वादशविधान्युत्तरोत्तरं श्रेष्ठानि ।

यतः—( १ ) चार्वाकः " स वा एष पुरुषोऽन्नरसमयः " इत्युक्तेः प्रत्यक्षमात्रप्रमाणवादी ( २ )—सुषुप्तावहं नासमिति प्रतीतेः शून्यवादी माध्यमिकः ( ३ ) क्रमादयं घट इत्यहमिति च प्रवृत्तिविज्ञानालयविज्ञानभेदेन द्विविधक्षणिकविज्ञानस्वरूप एवात्मा नान्य इति योगाचारः ( ४ )—ज्ञानाकारानुमेयक्षणिकबाह्यार्थ एवात्मेति सौत्रान्तिकः ( ५ )—क्षणभंगुरवादी क्षणिकबाह्यार्थ एवात्मेति वैभाषिकः ( ६ )—देहातिरिक्तो देहपरिणाम आत्मेति दिगम्बरमतावलम्बी जैनः ( ७ )—आत्मानात्मपरीक्षायां क्रियमाणायामावश्यकानां सकलपदार्थोद्देश्यलक्षणपरीक्षाणां प्रतिपादनेनानात्मवादनिराकरणकर्ता महर्षिर्गौतमः ( ८ )—महर्षिगौतमोक्तार्थे विशेषतः पदार्थविभागादिप्रतिपादयिता महर्षिः कणादः ( ९ )—स्वर्गनरकादिकं कर्मायत्तमिति कर्मप्राधान्यवादी महर्षिर्जैमिनिः ( १० )—प्रधानायत्तं सुखदुःखादिकं ततोऽन्यः पुरुष एवात्मेत्यादिवक्ता महर्षिः कपिलः ( ११ )—आत्मानात्मविचारोपयोगिमार्गप्रदर्

कउपासनाकाण्डप्रधानवादीपतञ्जलिः ( १२ )—आत्मज्ञानमेव सुखं ततोन्यदविद्याकल्पितं मिथ्येत्यत्र प्रयोजकाणीतराणि सर्वाण्यास्तिकदर्शनानीति वादि परमकृपालुमहर्षिभ्योसि इति । तेषु नास्तिकदर्शनानां सर्वेषां जैनदर्शनमन्तरेणानुपलब्धेस्तानि सर्वाणि विना केवलमास्तिकानां षड्दर्शनानां तत्तद्भाष्यानुसारेण संशोध्य मुद्रापणं कृतम् । तत्र कापिलं द्वाविंशतिसूत्रात्मकं षडध्यायात्मकं चेति द्विविधं सह पाठभेदादिटिप्पणतत्तदध्यायार्थसंग्रहकारिकाभिः तथा न्यायदर्शनं तत्तत्सूत्रोत्तरसंख्योत्तरसंख्याक्रमेण तदाह्निकान्ते विषयविभागप्रदर्शनेन तथा पूर्वमीमांसादर्शनपुस्तकगतपाठभेदान् ग्रन्थान्तरीयादिपाठभेदानधिकरणभेदानधिकरणावतरणिका—स्तत्तदवतारणाङ्केन तत्रस्थन्यायमालागततदधिकरणश्लोकसंख्यां तदन्तेऽधिकरणार्थप्रबोधकसूत्रानुक्रमसंख्यान्तवक्ररेखामध्येतदुत्तरतत्पादगतन्यायमालाकारिकासंख्यां तत्पादान्ततत्पादगतविषयभेदस्ततदध्यायादौ तत्तदध्यायगतविषयश्लोकैस्तथा—वेदान्तदर्शने मतभेदेन सूत्राधिकरणपाठान्तरं पुस्तकान्तरादिगतपाठान्तरं तत्सूत्रसंख्यातदनन्तरवक्ररेखामध्यसंख्ययाधिकरणसंख्येत्येवं बहुभिरंशैश्च मिलितमिदं महतामन्यविदुषामुपकाराय मुद्रापितं सत्प्रकाशत इति शम्.

अथ

# श्रीमज्जैमिनिमहर्षिप्रणीतं पूर्वमीमांसादर्शनम् ॥



## प्रथमोऽध्यायः । तत्र विध्यर्थवादादिप्रमाणं निरूप्यते.

३–३ अथ शास्त्रारम्भप्रतिज्ञाधिकरणं धर्मजिज्ञासाधिकरणम्–१ ॥

ॐ अथातो धर्मजिज्ञासा ॥ १ ॥

३–३ धर्मलक्षणाधिकरणम्–२ ॥

चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

अथ

# श्रीमज्जैमिनिमहर्षिप्रणीतं पूर्वमीमांसादर्शनम् ॥



## प्रथमोऽध्यायः । तत्र विध्यर्थवादादिप्रमाणं निरूप्यते.

१-१ अथ शास्त्रारम्भप्रतिज्ञाधिकरणं धर्मजिज्ञासाधिकरणम्—१ ॥

ॐ अथातो धर्मजिज्ञासा ॥ १ ॥

१-२ धर्मलक्षणाधिकरणम्—२ ॥

चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

१—१ धर्मप्रमाणपरीक्षाधिकरणम्—३ ॥

तस्य निमित्तपरीष्टिः ॥ ३ ॥

१ धर्मे प्रत्यक्षाद्यगम्यत्वाधिकरणम् —४ ॥

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

१ धर्मे विधिप्रामाण्याधिकरणम्—५ ॥

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

२ शब्दनित्यत्वाधिकरणम्—६ ॥

कर्मैके तत्र दर्शनात् ॥ ६ ॥ अस्थानात् ॥ ७ ॥ करोतिशब्दात् ॥ ८ ॥ सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥ प्रकृतिविकृत्योश्च ॥ १० ॥ वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥ समं तु तत्र दर्शनम् ॥ १२ ॥ सतः परमदर्शनं विषयानागमात् ॥ १३ ॥ प्रयोगस्य परम् ॥ १४ ॥ आदित्यवद्यौगपद्यम् ॥ १५ ॥ वर्णान्तरमविकारः ॥ १६ ॥ नादवृद्धिपरा ॥ १७ ॥ नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

सर्वत्र यौगपद्यात् ॥ १९ ॥ संख्या-भावात् ॥ २० ॥ अनपेक्षत्वात् ॥ २१ ॥ प्रख्याभावाच्च योगस्य ॥ २२ ॥ लिङ्गदर्शनाच्च ॥ २३ ॥

२ वेदप्रत्यायकत्वाधिकरणम्–७ ॥

उत्पत्तौ वाऽवचनास्स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥ तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात् ॥ २६ ॥

---

१ संनियमनादिति पाठान्तरम् ।

२ वेदापौरुषेयत्वाधिकरणम्–८ ॥

वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥२७॥ अनित्यदर्शनाच्च ॥२८॥ उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥ आख्याः प्रवचनात् ॥ ३० ॥ परन्तु श्रुतिसामान्यमात्रम् ॥ ३१ ॥ कृते वा विनियोगस्स्यात्कर्मणस्सम्बन्धात् ॥३२॥

॥ न्यायश्लोकाः–( २६ ) ॥ अधिकरणानि–( ८ ) ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने प्रथमस्याध्यायस्य [ विधिरूपमाननिरूपण नाम ] प्रथमः पादः ॥ १ ॥ १ ॥

३—१ अर्थवादाधिकरणम्—१ ॥

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥१॥ शास्त्रदृष्टविरोधाच्च ॥ २ ॥ तथा फलाभावात् ॥ ३ ॥ अन्यानर्थक्यात् ॥ ४ ॥ अभागिप्रतिषेधाच्च ॥ ५ ॥ अनित्यसंयोगात् ॥ ६ ॥ विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ तुल्यं च साम्प्रदायिकम् ॥ ८ ॥ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधस्स्याच्छब्दार्थस्त्वप्रयोगभू-

तस्तस्मादुपपद्येत ॥ ९ ॥ गुणवा-
दस्तु ॥ १० ॥ रूपात्प्रायात् ॥ ११॥
दूरभूयस्त्वात् ॥ १२ ॥ अपराधात्क-
र्तुश्च पुत्रदर्शनम् ॥ १३ ॥ आका-
लिकेप्सा॥ १४॥ विद्याप्रशंसा ॥ १५॥
सर्वत्वमाधिकारिकम् ॥ १६॥ फलस्य
कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः
फलविशेषस्स्यात् ॥ १७ ॥ अन्त्य-
योर्यथोक्तम् ॥ १८ ॥

३-१ विधिवन्निगदाधिकरणम्-२ ॥

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं

ह्यनर्थकम् ॥ १९ ॥ लोकवदिति चेत् ॥ २० ॥ न पूर्वत्वात् ॥२१॥ उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥ विधिश्चानर्थकः क्वचित्तस्मात् स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम्॥२३॥ प्रकरणे सम्भवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥ विधौ च वाक्यभेदः स्यात् ॥ २५ ॥

२ हेतुमन्निगदाधिकरणम्—२ ॥

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥ स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥ अर्थे स्तुति-

रन्याय्योति चेत् ॥ २८ ॥ अर्थस्तु विधिशेषत्वाद्यथा लोके ॥ २९ ॥ यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥ ३० ॥

२–१ मन्त्रलिङ्गाधिकरणम् ४ ॥

तदर्थशास्त्रात् ॥ ३१ ॥ वाक्यानियमात् ॥ ३२ ॥ बुद्धशास्त्रात् ॥ ३३ ॥ अविद्यमानवचनात् ॥ ३४ ॥ अचेतनेऽर्थबन्धनात् ॥ ३५ ॥ अर्थविप्रतिषेधात् ॥ ३६ ॥ स्वाध्यायवद्वचनात् ॥ ३७ ॥ अविज्ञेयात् ॥ ३८ ॥ अ-

नित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥ गुणार्थेन पुनः श्रुतिः ॥ ४१ ॥ परिसंख्या ॥४२॥ अर्थवादो वा ॥ ४३॥ अविरुद्धं परम् ॥ ४४ ॥ संप्रैषे कर्मगर्हानुपलम्भः संस्कारत्वात् ॥ ४५॥ अभिधानेऽर्थवादः ॥ ४६ ॥ गुणाद्प्रतिषेधः स्यात् ॥ ४७ ॥ विद्यावचनमसंयोगात् ॥ ४८ ॥ सतः परमविज्ञानम् ॥ ४९ ॥ उक्तश्चाऽनित्यसंयोगः ॥ ५० ॥ लिङ्गोपदेशश्च तदर्थत्वात् ॥५१॥ ऊहः॥५२॥विधिश-

र्हाश्च ॥ ५३ ॥ ( १३ ) ॥ (४) ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने प्रथमस्याऽध्यायस्य ( अर्थवादरूपप्रमाणनिरूपणं नाम ) द्वितीयः पादः ॥ १ ॥ २॥

---

२–१ अथ स्मृतिप्रामाण्याधिकरणम्—१॥

धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् ॥ १॥ अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥

२–२ श्रुतिप्राबल्याधिकरणम्–२ ॥

विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ॥ ३ ॥

२ दृष्टमूलकस्मृत्यप्रामाण्या०—३ ॥

हेतुदर्शनाच्च ॥ ४ ॥

४ पदार्थप्राबल्याधिकरणम्—४ ॥

शिष्टाकोपे विरुद्धमिति चेत् ॥५॥ न शास्त्रपरिमाणत्वात् ॥ ६ ॥ अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥

६ शास्त्रप्रसिद्धार्थप्रामाण्या० वा—आर्य म्लेच्छाधिकरणम्—५ ॥

तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥ शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥

२–१ म्लेच्छप्रसिद्धार्थप्रामाण्या०–६ ॥

चोदितं तु प्रतीयेताऽविरोधात् प्रमाणेन ॥ १० ॥

२–१ कल्पसूत्राणां स्वतः प्रामाण्या०-७॥

प्रयोगशास्त्रमिति चेत् ॥ ११ ॥ नाऽसान्नियमात् ॥ १२ ॥ अवाक्यशेषाच्च ॥ १३ ॥ सर्वत्र च प्रयोगात्सन्निधानशास्त्राच्च ॥ १४ ॥

१–१ होलाकाधिकरणम्–८ ॥

अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात्॥ १५॥ अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य ॥ १६ ॥

दर्शनाद्विनियोगः स्यात् ॥ १७ ॥
लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥
आख्या हि देशसंयोगात् ॥ १९ ॥
न स्याद्देशान्तरेष्विति चेत् ॥ २० ॥
स्याद्योगाख्या हि माथुरवत् ॥ २१ ॥
कर्मधर्मो वा प्रवणवत् ॥ २२ ॥
तुल्यं तु कर्तृधर्मेण ॥ २३ ॥

२-१ साधुपदप्रयुक्त्यधिकरणम्-९ ॥

प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥२४॥ शब्दे प्रयत्न-निष्पत्तेरपराधस्य भागित्वम् ॥२५ ॥

अन्यायश्चानेकशब्दत्वम् ॥२६ ॥ तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २७॥ तदशक्तिश्चानुरूपत्वात् ॥२८॥ एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् २९॥

४–१ लोकवेदयोश्शब्दैक्या० वा—आकृत्यधिकरणम्—१० ॥

प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥३०॥ अद्रव्यशब्दत्वात् ॥३१॥ अन्यदर्शनाच्च ॥ ३२ ॥ आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥ न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३४ ॥ तदर्थत्वात्प्रयो-

**गस्थ्याविभागः॥३८॥(३८॥)॥(१०॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने प्रथमस्याध्यायस्य ( स्मृतिरूपप्रमाणनिरूपणं नाम ) तृतीयः पादः ॥ १ ॥ ३ ॥

---

२ अथ उद्भिदादिशब्दानां यागनामतया प्रामाण्याधिकरणम्-१ ॥

**उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥**

२-१ उद्भिदादिशब्दानां यागनामताधिकरणम्-२ ॥

**अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥**

२ चित्रादिशब्दानां यागनामता०—३ ॥

**यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ ३ ॥**

५ अग्निहोत्रादिशब्दानां यागनामता० वा—तत्प्रख्यन्यायाधिकरणम्—४ ॥

**तत्प्रख्यञ्चान्यशास्त्रम् ॥ ४ ॥**

३ श्येनादिशब्दानां यागनामता० वा तद्व्यपदेशन्यायाधिकरणम्—५ ॥

**तद्व्यपदेशं च ॥ ५ ॥**

वाजपेयादिशब्दानां नामधेयता०—६ ॥

**नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥ तुल्यत्वात् क्रिययोर्न ॥ ७ ॥ ऐकशब्द्ये परार्थवत् ॥ ८ ॥**

२–१ आग्नेयादिशब्दानामनामता०–७ ॥

**तद्गुणास्तु विधीयेरन्नविभागाद्वि-धानार्थे न चेदन्येन शिष्टाः ॥ ९ ॥**

२–१ बर्हिरादिशब्दानां जातिवाचित्वाधिकरणम्–८ ॥

**बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥**

२ प्रोक्षण्यादिशब्दानां यौगिकता०–९ ॥

**प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥**

१ निर्मन्थ्यशब्दस्य यौगिकता०–१० ॥

**तथानिर्मन्थ्ये ॥ १२ ॥**

४–१ वैश्वदेवादिशब्दानां नामधेयताधिकरणम्–११ ॥

**वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥**

न वा प्रकरणात्प्रत्यक्षविधानाच्च नहि प्रकरणं द्रव्यस्य ॥ १४ ॥ मिथश्चानर्थसम्बन्धः ॥ १५ ॥ परार्थत्वाद्गुणानाम् ॥ १६ ॥

२–१ वैश्वानरेऽष्टत्वादीनामर्थवादताधिकरणम्–१२ ॥

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥ गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥ तच्छेषो नोपपद्यते ॥ १९॥ अविभागा-

द्विधानार्थं स्तुत्यर्थेनोपपद्येरन् ॥ २० ॥

कारणं स्यादिति चेत् ॥ २१ ॥

आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थो हि विधीयते ॥ २२ ॥

२ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थत्वाधिकरणम्—१३ ॥

तत्सिद्धिः ॥ २३ ॥

१ आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थताधिकरणम्—१४ ॥

जातिः ॥ २४ ॥

१ यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम्—१५ ॥

सारूप्यात् ॥ २५ ॥

३ अपश्वादिशब्दानां गवादिप्रशंसार्थ-
त्वाधिकरणम्—१६ ॥

**प्रशंसा ॥ २६ ॥**

४ भूमाधिकरणं-वा-सृष्टिव्यपदेशा०-१७ ॥

**भूमा ॥ २७ ॥**

१ लिङ्गसमवायन्याया०वा-प्राणभृदा-
दिशब्दानां स्तुत्यर्थत्वाधिकरणम्—१८ ॥

**लिङ्गसमवायात् ॥ २८ ॥**

४वाक्यशेषेण सन्दिग्धार्थनिरूपणा०-१९ ॥

**सन्दिग्धेषु वाक्यशेषात् ॥ २९ ॥**

२सामर्थ्येनाव्यवस्थितानां व्यवस्था०—२० ॥

**अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥**

**( ५६ ) ॥ ( २० ) ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने प्रथमस्याध्यायस्य ( उद्भिच्चित्रादिनामरूपत्वे माननिरूपणं नाम ) चतुर्थः पादः॥ ॥ १ ॥ ४ ॥ समाप्तः प्रथमोऽध्यायः ॥ (१)॥ ॥ (१५०) ॥ ( ४२ ) ॥



**अथ द्वितीयोऽध्यायः । तत्र यागदानादिधर्मभेदो निरूप्यते-**

६ अपूर्वस्याख्यातप्रतिपाद्यत्वा०-१ ॥

**भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥**

**सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥**

**येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धि-**

स्तानि नामानि तस्मात्तेभ्यः पराकां-
क्षाभूतत्वात्स्वे प्रयोगे ॥ ३ ॥
येषां तूत्पत्तावर्थे स्वे प्रयोगे न वि-
द्यते तान्याख्यातानि तस्मात्तेभ्यः
प्रतीयेताऽऽश्रितत्वात्प्रयोगस्य ॥ ४ ॥

३-२ अपूर्वस्यास्तित्वाधिकरणम्-२ ॥

चोदना पुनरारम्भः ॥ ५ ॥

(२-१ कर्मणां गुणप्रधानभावाविभागा०-३ ॥

तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥
यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभू-
तानि द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥
यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रती-

येत तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

२ सम्मार्जनादीनामप्रधानता०-४ ॥

धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥९॥ तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात् ॥ १० ॥ द्रव्योपदेश इति चेत् ॥ ११ ॥ न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

२ स्तोत्रादिप्राधान्या०-५ ॥

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥१३ ॥ अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात्॥१४॥ वशावद्वा गुणार्थं

स्यात् ॥ १५ ॥ न श्रुतिसमवायि-
त्वात् ॥१६॥ व्यपदेशभेदाच्च॥१७॥
गुणश्चानर्थकः स्यात् ॥ १८ ॥ तथा
याज्यापुरोरुचोः ॥ १९ ॥ वशाया-
मर्थसमवायात् ॥ २० ॥ यच्चेति वा
ऽर्थवत्त्वात् स्यात् ॥२१॥ न त्वाम्ना-
तेषु ॥ २२ ॥ दृश्यते ॥ २३ ॥अपि
वा श्रुतिसंयोगात्प्रकरणे स्तौतिशं-
सती क्रियोत्पत्तिं विदध्याताम्॥२४॥
शब्दपृथक्त्वाच्च ॥ २५ ॥ अनर्थकं
च तद्वचनम् ॥ २६ ॥ अन्यश्चार्थः
प्रतीयते ॥ २७ ॥ अभिधानं च

कर्मवत् ॥ २८ ॥ फलनिर्वृत्तिश्च ॥ २९ ॥

२ मन्त्राविधायकत्वाधिकरणम्—६ ॥

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ॥ ३० ॥ अपि वा प्रयोगसामर्थ्यान्मन्त्रो ऽभिधानवाची स्यात् ॥ ३१ ॥

२ मन्त्रनिर्वचना०—७ ॥

तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

२ ब्राह्मणनिर्वचना०—८ ॥

शेषे ब्राह्मणशब्दः ॥ ३३ ॥

१ ऊहाद्यमन्त्रता०—९ ॥

अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥ ३४ ॥

० ऋग्लक्षणाधिकरणम्—१० ॥

तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

० सामलक्षणाधिकरणम्—११ ॥

गीतिषु सामाख्या ॥ ३६ ॥

१ यजुर्लक्षणाधिकरणम्—१२ ॥

शेषे यजुःशब्दः ॥ ३७ ॥

२ निगदानां यजुष्ट्वाधि०—१३ ॥

निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३८ ॥ व्यपदेशाच्च ॥ ३९ ॥ यजूंषि वा तद्रूपत्वात् ॥ ४० ॥ वच-

नाद्धर्मविशेषः ॥ ४१ ॥ अर्थाच्च ॥ ॥ ४२ ॥ गुणार्थौ व्यपदेशः ॥४३ ॥ सर्वेषामिति चेत् ॥४४॥ न ऋग्व्यपदेशात् ॥ ४५ ॥

२ एकवाक्यत्वलक्षणा०–१४ ॥

अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यात् ॥ ४७ ॥

२ वाक्यभेदाधिकरणम्–१५ ॥

समेषु वाक्यभेदः स्यात् ॥४७ ॥

२–२ अनुषंगाधिक०१६–(१६–१७) ॥

अनुषंगो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

२ व्यवेतानुषंगा०–१७–१८ ॥

व्यव(वा)यान्नानुषज्येत ॥ ४९ ॥

( ३८ ) ॥ ( १७ वा १८ ) ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा दर्शने द्वितीयस्याध्यायस्य ( आख्यातबोध्यापूर्वतत्सद्भावयोर्निरूपणंनाम) प्रथमःपादः२-१॥

---

२–१ अंगाऽपूर्वभेदाधिकरणम्–१ ॥

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

२ समिदाद्यपूर्वभेदाधिकरणम्–२ ॥

एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि

स्यात् ॥ २ ॥ प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

९ आघाराद्याग्नेयादीनामंगाङ्गिभावा०—३॥

विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात्॥४॥ गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥ चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥ व्यपदेशश्च तद्वत् ॥ ७ ॥ लिंगदर्शनाच्च ॥ ८ ॥

उपांशुयाजाऽपूर्वताधिकरणम्—४ ॥

पौर्णमासीवदुपांशुयाजः स्यात् ॥ १ ॥

चोदना वाऽप्रकृतत्वात् ॥ १० ॥ गुणोपबन्धात् ॥ ११ ॥ प्राये वचनाच्च ॥ १२ ॥

२ आघाराद्यपूर्वताधिकरणम्—५ ॥

आघारोग्निहोत्रमरूपत्वात् ॥ १३ ॥ संज्ञोपबन्धात् ॥ १४ ॥ अप्रकृतत्वाच्च ॥ १५ ॥ चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥ १६ ॥

पशुसोमाऽपूर्वताधिकरणम्—६ ॥

द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि

तस्य गुणार्थेन ॥ १७ ॥ अचोदकाश्च संस्काराः ॥ १८ ॥ तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥ संस्कारस्तु न भिद्येत परार्थत्वाद्द्रव्यस्य गुणभूतत्वात् ॥ २१ ॥

९ संख्याकृतकर्मभेदाधिकरणम्—७ ॥

पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ २१ ॥

२ संज्ञाकृतकर्मभेदाधिकरणम्—८ ॥

संज्ञा चोत्पत्तिसंयोगात् ॥२२ ॥

२ देवताभेदकृतकर्मभेदाधिकरणम्—९ ॥

गुणश्चाऽपूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥

१ द्रव्यविशेषानुक्तिकृतकर्मैक्या०—१०॥

अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥

द्रव्याद्द्रव्यसफलत्वा०—११ ॥

फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात् ॥ २५॥ अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥

२ वारवन्तीयादीनां कर्मान्तरता०—१२।

समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

४ सौभरिनिधनयोः कामैक्या० १३ ॥

**सौभरे पुरुषश्रुतेर्निधनं कामसंयोगः ॥ २८ ॥ सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः ॥२९॥ (३८) (१३) ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने द्वितीयस्याध्यायस्य ( धातुभेदपुनरुक्त्यादिना कर्मभेदनिरूपणं नाम ) द्वितीयः पादः ॥ २ ॥ ॥ २ ॥

---

३ ग्रहाग्रताया ज्योतिष्टोमाङ्गता०-१ ॥

**गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥ एकस्य तु लिङ्गभेदात् प्रयोजनार्थ-**

मुच्यैतैकत्वं गुणवाक्यत्वात् ॥ २ ॥

३ अवेष्टेः क्रत्वन्तरताधिकारताधि०—२॥

अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥

३ आधानस्य विधेयत्वाधि०—३ ॥

आधाने सर्वशेषत्वात् ॥ ४ ॥

२ दाक्षायणादीनां गुणताधि०—४ ॥

अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥ अगुणाच्च कर्मचोदना ॥ ६॥ समाप्तं च फले वाक्यम् ॥७॥ विकारो वा प्रकरणात् ॥८ ॥ लिंगदर्शनाच्च ॥ ९ ॥ गुणात्संज्ञोपबन्धः ॥ १० ॥ समाप्तिरविशिष्टा ॥ ११ ॥

४ द्रव्यदेवतायुक्तानां यागान्तरता०—५॥

संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥ यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥ यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ १४ ॥ लिंगदर्शनाच्च ॥१५॥

१ वत्सालम्भादीनां संस्कारताधि०—६ ॥

विशये प्रायदर्शनात्॥ १६॥ अर्थवादोपपत्तेश्च ॥ १७ ॥

२ नैवारचरोराधानार्थताधि०—७॥

संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

३ पात्नीवतस्यपर्यग्निकरणगुणकत्वाधि०—८

पात्नीवते तु पूर्वत्वादवच्छेदः ॥१९॥

२ अदाभ्यादीनां ग्रहनामताधि०—९ ॥

अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ २० ॥

२ अग्निचयनस्य संस्कारताधि०—१०॥

अग्निस्तु लिंगदर्शनात्क्रतुशब्दः प्रतीयेत ॥ २१ ॥ द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥ तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥

२ मासाग्निहोत्रादीनां क्रत्वन्तरताधि०—११॥

प्रकरणान्तरे प्रयोजनान्यत्वम् ॥२४

२ आग्नेयादिकाम्येष्ट्यधि०-१२ ॥

फलं चाकर्मसन्निधौ ॥ २५ ॥

३ अवेष्टेरन्नाद्यफलकत्वाधि०-१३ ॥

सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः ॥ २६ ॥

२ आग्नेयद्विरुक्तेः स्तुत्यर्थताधि०-१४ ॥

आग्नेयसूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥ अविभागात्तु कर्मणां द्विरुक्तेर्न विधीयते ॥ २८ ॥ अन्यार्थां वा पुनः श्रुतिः ॥२९॥( १४)॥३४॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने द्वितीयस्याऽध्यायस्य ( रथन्तरादीनां कर्मभेदप्रामाण्यापवादत्वनिरूपणं नाम ) तृतीयः पादः ॥ २ ॥ ३ ॥

२ यावज्जीविकाग्निहोत्राधि०—१ ॥

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥ कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥ लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत्स्यात् ॥ ३ ॥ व्यपवर्गं च दर्शयति कालश्चेत्कर्मभेदः स्यात् ॥४॥ अनित्यत्वात्तु नैवं स्यात्॥५॥ विरोधश्चापि पूर्ववत् ॥ ६ ॥ कर्तुस्तु धर्मनियमात् कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥

२ सर्वशाखाप्रत्ययैककर्मता०—२ ॥

नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्ताऽन्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥ एकं वा संयोगरूपचोदनाख्याविशेषात ॥ ९ ॥ न नाम्ना स्यादचोदनाभिधानत्वात् ॥ १० ॥ सर्वेषां चैककर्म्यं स्यात् ॥ ११ ॥ कृतकं चाभिधानम् ॥ १२ ॥ एकत्वेऽपि परम् ॥ १३ ॥ विद्यायां धर्मशास्त्रम् ॥ १४ ॥ आग्नेयवत्पुनर्वचनम् ॥ १५ ॥ अद्भिर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥

अर्थासन्निधेश्च ॥ १७ ॥ न चैकं प्रति शिष्यते ॥ १८ ॥ समाप्तिवच्च संप्रेक्षा ॥ १९ ॥ एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥ २० ॥ प्रायश्चित्तं निमित्तेन ॥ २१ ॥ प्रक्रमाद्वा नियोगेन ॥ २२ ॥ समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥ २३ ॥ लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २४ ॥ द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २५ ॥ विहितप्रतिषेधात् पक्षेऽतिरेकः

स्यात् ॥ २६ ॥ सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २७ ॥ उपहव्येऽप्रतिप्रसवः ॥ २८ ॥ गुणार्था वा पुनः श्रुतिः ॥ २९ ॥ प्रत्ययं चापि दर्शयति ॥ ३० ॥ अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥ ३१ ॥ विरोधिना त्वसंयोगादैककर्म्यं तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥३२॥(२)॥४॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने द्वितीयस्याध्यायस्य ( नित्यकाम्यप्रयोगयोर्भेदनिरूपणं नाम) चतुर्थः पादः ॥ २॥ ॥ ४ ॥ समाप्तौ द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः ।

तत्र प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वमिति ( कर्मभेदे शेषशेषिभावः ) निरूप्यते—

२ प्रतिज्ञाधिकरणम्—१ ॥

**अथातः शेषलक्षणम् ॥ १ ॥**

१ शेषलक्षणाधिकरणम्—२ ॥

**शेषः परार्थत्वात् ॥ २ ॥**

२ शेषलक्ष्याधिकरणम्—३ ॥

**द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥**

**कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥ फलं च पुरुषार्थत्वात् ॥५॥**

**पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥**

२ निर्वपणादीनां व्यवस्थितविषयत्वा०—४ ॥

तेषामर्थेन संबन्धः ॥ ७ ॥ विहितस्तु सर्वधर्मः स्यात् संयोगतोऽविशेषात्प्रकरणाविशेषाच्च ॥ ८ ॥ अर्थलोपादकर्म स्यात् ॥ ९ ॥ फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥

२ स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिकरणम्—५ ॥

द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ११ ॥

२ आरुण्यादीनां गुणानामसंकीर्णता० वा अरुणाधिकरणम्–६ ॥

अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ १२ ॥

२ ग्रहसंमार्जना०–चाग्रहैकत्वन्याया०–७॥

एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥ सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ १४ ॥ चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत १५॥

२ चमसादौ संमार्गाद्यप्रयोगा०–८ ॥

संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥ व्यवस्था वाऽर्थस्य

**श्रुतिसंयोगात् तस्य शब्दप्रमाणत्वात् ॥ १७ ॥**

३ सप्तदशारात्नतायाः पशुधर्मता०–९ ॥

**आनर्थक्यात्तदंगेषु ॥ १८ ॥**

३+२ अभिक्रमणादीनां प्रयाजमात्राङ्गताधिकरणम्–१० ॥

**कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १९ ॥ साकांक्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण २० ॥**

२ उपवीतस्य प्राकरणिकाङ्गता ०–११ ॥

**सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ २१ ॥**

२ गुणानां मिथोऽसम्बन्धा०—१२ ॥

गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात् ॥ २२ ॥

३ वार्त्रघ्न्यधिकरणम्—१३ ॥

मिथश्चानर्थसम्बन्धात् ॥ २३ ॥

२ हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम्—१४ ॥

आनन्तर्यमचोदना ॥ २४ ॥

वाक्यानां च समाप्तत्वात् ॥ २५ ॥

३ चतुर्द्धाकरणादीनामाग्नेयमात्राङ्गता०—१५ ॥

शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ २६ ॥

व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन

**सम्बन्धाल्लक्षणार्था गुणश्रुतिः ॥२७॥ (१८) ॥ ३८ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-दर्शने तृतीयस्याऽध्यायस्य ( शेषत्वबोधकानां श्रुतिलिंगादीनां विचारो नाम ) प्रथमः पादः ॥ ॥ ३ ॥ १ ॥

---

२ मुख्ये विनियोगा० बार्बर्हिन्याया०—१॥

**अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेष-भावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽ-र्थेन नित्यसंयोगात् ॥१॥ संस्कारक-त्वादचोदितेन स्यात् ॥ २ ॥**

२ ऐन्द्र्या गार्हपत्ये विनियोगा० वा ऐन्द्री न्यायाधिकरणम्—२ ॥

वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥ गुणाद्वाऽप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥

४ आह्वानविनियोगाधिकरणम्—३ ॥

तथाह्वानमपीति चेत् ॥ ५ ॥ न कालविधिश्चोदितत्वात् ॥ ६ ॥ गुणाभावात् ॥ ७ ॥ लिङ्गाच्च ॥ ८ ॥ विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥

३ अग्निविहरणादिप्रकाशकमन्त्राविनियोगाधिकरणम्—४ ॥

तथोत्थानविसर्जने ॥ १० ॥

२ सूक्तवाकस्य प्रस्तरप्रहरणांगता० वा प्र-
स्तरप्रहरणन्यायाधिकरणम्-५ ॥

सूक्तवाके च कालविधिः परार्थ-
त्वात् ॥ ११ ॥ उपदेशो वा याज्या-
शब्दो हि नाकस्मात् ॥ १२ ॥ स
देवतार्थन्तत्संयोगात् ॥ १३ ॥ प्राति-
पत्तिरिति चेत्स्विष्टकृद्दुभयसंस्कारः
स्यात् ॥ १४ ॥

२ सूक्तवाकानामर्थानुसारेण विनियोगा०वा-
सूक्तवाकन्यायाधिकरणम्-६ ॥

कृत्स्नोपदेशादुभयत्र सर्ववच-
नम्॥१५॥यथार्थं वा शेषभूतसंस्का-

रात्॥१६॥ वचनादिति चेत्॥१७॥ प्रकरणाविभागादुभे प्रति कृत्स्न-शब्दः॥१८॥

३ काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गताधिकरणम्--७॥

लिंगक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम्॥१९॥

२ आग्नीध्रोपस्थाने प्राकृतमन्त्राविनियोगाधिकरणम्--८॥

अधिकारे च मन्त्रविधिस्तदाख्येषु शिष्टत्वात्॥२०॥ तदाख्योवा प्रक-रणोपपत्तिभ्याम्॥२१॥ अनर्थक-

श्चोपदेशः स्यादसम्बन्धात्फलवत।
(न ह्युपस्थानं फलवत्) ॥ २२ ॥
सर्वेषां चोपदिष्टत्वात् ॥ २३ ॥

२ भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणम्–९ ॥

लिंगसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ॥२४॥ तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्२५॥

२ मन्द्राभिभूतिरित्यादेरेकमन्त्रता–१० ॥

गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २६ ॥

---

१ इदमधिकतया पठ्यते क्वचित् ॥

३ इन्द्रपीताधिकरणम्—११॥

लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ।२७। यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥२८॥

३ अभ्युन्नीतसोमभक्षणाधि०—१२॥

पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २९ ॥ अपनयाद्वा पूर्वस्याऽनुपलक्षणम् ॥३०॥ ग्रहणाद्वाऽपनयः स्यात् ॥ ३१ ॥

३ पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम्—१३॥

पात्नीवते तु पूर्ववत् ॥ ३२ ॥ग्रहणाद्वाऽपनीतं स्यात् ॥ ३३ ॥

२ पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणी-
यताधिकरणम्-१४ ॥

**त्वष्टारं तूपलक्षयेत्पानात् ॥३४॥**

**अतुल्यत्वात्तु नैवं स्यात् ॥ ३५ ॥**

२ पात्नीवतभक्षे त्रिंशतामनुपलक्षणाधिक-
रणम्-१५ ॥

**त्रिंशच्च परार्थत्वात् ॥ ३६ ॥**

२ भक्षणेऽनुवषट्कारदेवताया अनुपलक्षणा-
धिरकणम्-१६ ॥

**वषट्कारश्च कर्तृवत् ॥ ३७ ॥**

२ अनैन्द्राणाममन्त्रकभक्षणा०वा-कृत्वा-
चिन्तान्यायाधिकरणम्-१७ ॥

**छन्दःप्रतिषेधस्तु सर्वगामि-
त्वात् ॥ ३८ ॥**

२ ऐन्द्राग्नभक्षस्यामन्त्रकता०—१८ ॥

ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ ॥ ३९ ॥ एकस्मिन्वा देवतान्तराद्विभागवत् ॥ ४० ॥

३ गायत्रच्छन्दस इत्यादिमन्त्राविनियोगाधिकरणम्—१९ ॥

छन्दश्च देवतावत् ॥ ४१ ॥ सर्वेषु वाऽभावादेकच्छन्दसः ॥ ४२॥ सर्वेषां वैकमंत्र्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो हि ॥ ४३ ॥ (१९) ॥ ४६ ॥

इति श्रीमैज्जामिनिमहर्षिप्रणीते पूर्वमीमांसा-

दर्शने तृतीयस्याऽध्यायस्य (शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये लिङ्गविचारो नाम) द्वितियः पादः ॥ ३ ॥ २ ॥

---

३ उच्चैष्ट्वादीनां वेदधर्मताधि०—१ ॥

**श्रुतेर्जाताधिकारः स्यात् ॥१॥ वेदो वा प्रायदर्शनात् ॥ २ ॥ लिङ्गाच्च ॥ ३ ॥ धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ॥ ४ ॥ त्रयीविद्याख्या च तद्विदि ॥ ५ ॥ व्यतिक्रमे यथाश्रुतीति चेत् ॥ ६ ॥ न सर्वस्मिन्निवेशात् ॥७ ॥ वेदसंयोगान्न प्रकरणेन बाध्येत ॥ ८ ॥**

३ आधाने गानस्योपांशुताधि ०—२ ॥

**गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥**

२ ज्योतिष्टोमस्य याजुर्वैदिकता०—३ ॥

**भूयस्त्वेनोभयश्रुति ॥ १० ॥**

२ प्रकरणस्य विनियोजकता०—४ ॥

**असंयुक्तं प्रकरणादिकर्त्तव्यतार्थित्वात् ॥ ११ ॥**

४ क्रमस्य विनियोजकत्वा ०—५ ॥

**क्रमश्च देशसामान्यात् ॥ १२ ॥**

२ समाख्याया विनियोजकत्वा०—६ ॥

**आख्या चैवं तदर्थत्वात् ॥ १३॥**

३ +३+२+२+२+२ श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां पूर्वपूर्वबलीय-स्त्वा० ७-८-९-१०-११-१२ ॥

श्रुति-लिंग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ १४ ॥

२ द्वादशोपसत्ताया अहीनाङ्गता०-१३ ॥

अहीनो वा प्रकरणाद्गौणः ॥ १५ ॥

असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ॥ १६ ॥

२ कुलायादौ प्रतिपदोरुत्कर्षा०-१४ ॥

द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य १७ ॥

पश्चेण थं क्रूनस्येनि चेत् ॥ १८ ॥ न-प्रकृतेरेकसंयोगात् ॥ १९ ॥

२ जाघन्या अनुत्कर्षाधि०—१५ ॥

जाघनी चैकदेशत्वात् ॥ २० ॥ चोद ॥ वाऽपूर्वत्वात् ॥ २१ ॥ एक-देश इति चेत् ॥ २२ ॥ न प्रकृते-रशास्त्रनिष्पत्तेः ॥ २३ ॥

२ संतर्दनस्य संस्थानिवेशा०—१६ ॥

सन्तर्दनं प्रकृतौ क्रयणवदनर्थंलो-पात्स्यात् ॥ २४ ॥ उत्कर्षो वा ग्रह-णाद्विशेषस्य ॥ २५ ॥ कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥ २६ ॥

क्रतुतो वाऽर्थवादानुपपत्तेः स्यात् ॥ २७ ॥ संस्थाश्च कर्तृवद्धारणार्थाविशेषात् ॥ २८ ॥ उक्थ्यादिषु वाऽर्थस्य विद्यमानत्वात् ॥ २९ ॥ अविशेषात्स्तुतिर्व्यर्थेति चेत् ॥ ३० ॥ स्यादनित्यत्वात् ॥ ३१ ॥

२ प्रवर्ग्यनिषेधा०–१७ ॥

सङ्ख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३२ ॥ नैमित्तिकं वा कर्तृसंयोगाल्लिंगस्य तन्निमित्तत्वात् ॥ ३३ ॥

२ पौष्णपेषणस्य विकृतौ विनियोगाधिकरणम्–१८ ॥

पौष्णं पेषणं विकृतौ प्रतीयेताऽ-

चोदनात्प्रकृतौ ॥ ३४ ॥

२पौष्णपेषणस्य चरावेव निवेशाधि०—१९॥

तत्सर्वार्थमविशेषात् ॥३५॥ चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात् ॥ ३६ ॥ चरावपीति चेत् ॥३७॥ न पाक्तिनामत्वात् ॥३८॥

२ पौष्णपेषणस्यैकदेवत्ये निवेशा०—२०॥

एकस्मिन्नेकसंयोगात् ॥ ३९ ॥ धर्माविप्रतिषेधाच्च ॥ ४० ॥ अपि वा सद्वितीये स्याद्देवतानिमित्तत्वा-त् ॥ ४१ ॥ लिंगदर्शनाच्च ॥ ४२ ॥

वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धिचरावपेषणं भवति ॥ ४३ ॥ एकस्मिन्वाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥४४॥ हेतुमात्रमदन्तत्वम् ॥ ४५ ॥ वचनं परम् ॥४६॥ ( २० ) ॥४८॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने तृतीयस्याऽध्यायस्य ( शेषत्वबोधकश्रुत्यादीनां मध्ये वाक्यप्रकरणादिविचारो नाम ) तृतीयः पादः ॥ ३ ॥ ३ ॥

---

२ निवीतस्यार्थवादत्वा०—१॥

निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥ अपदेशो वाऽ-

र्थस्य विद्यमानत्वात् ॥ २ ॥ विधि-स्त्वपूर्वत्वात्स्यात् ॥ ३ ॥ स प्राया-त्कर्मधर्मः स्यात् ॥ ४ ॥ वाक्यशेष-त्वात् ॥ ५ ॥ तत्प्रकरणे यत्तत्संयु-क्तमविप्रतिषेधात् ॥ ६ ॥ तत्प्रधाने वा तुल्यवत्प्रसंख्यानादितरस्य तदर्थ-त्वात् ॥ ७ ॥ अर्थवादो वा प्रकरणात् ॥८॥ विधिना चैकवाक्यत्वात् ॥९॥

उपवीतस्य दर्शपूर्णमासाङ्गता०—२ ॥

उपवीतं लिंगदर्शनात्सर्वधर्मः स्यात् ॥ १० ॥ न वा प्रकरणात्तस्य दर्श-नम् ॥ ११ ॥

१ उपवीतस्य विधित्वाधिका०–३ ॥

विधिर्वा स्यादपूर्वत्वात् ॥ १२ ॥

२ उपवीतोदगग्रत्वयोरनुवादताधि०–४॥

उदक्त्वं चापूर्वत्वात् ॥ १३ ॥

सतो वा लिंगदर्शनम् ॥ १४ ॥

२ समिद्धारणस्य विधिताधि०–५ ॥

विधिस्तु धारणेऽपूर्वत्वात् ॥१५॥

२ दिग्विभागस्यार्थवादताधि०–६ ॥

दिग्विभागश्च तद्वत्सम्बन्धास्यार्थहेतुत्वात् ॥ १६ ॥

२ परुषि दितादीनामनुवादता०–७ ॥

परुषि दितपूर्णघृतविदग्धं च तद्वत्॥ १७ ॥

३ अनृतवदननिषेधस्य क्रतुधर्मता०—८ ॥

**अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ १८ ॥ विधिर्वा संयोगान्तरात् ॥ १९ ॥**

१ जञ्जभ्यमानधर्माणां प्रकरणे निवेशाधिकरणम्—९ ॥

**अहीनवत्पुरुषस्तदर्थत्वात् ॥ २० ॥ प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ॥ २१ ॥ व्यपदेशादपकृष्येत ॥ २२ ॥**

२ अवगोरणादीनां पुमर्थता०—१० ॥

**शंयौ च सर्वपरिदानात् ॥ २३ ॥**

१ मलवद्वाससस्संवादनिषेधाधि०—११ ॥

प्रागपरोधान्मलवद्वाससः ॥२४ ॥ अन्नप्रतिषेधाच्च ॥ २५ ॥

२ सुवर्णधारणादीनां पुरुषधर्मता०—१२ ॥

अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ २६ ॥ अद्रव्यत्वात्तु शेषः स्यात् ॥ २७ ॥ वेदसंयोगात्॥२८॥ द्रव्यसंयोगाच्च ॥ २९ ॥ स्याद्वाऽस्य संयोगवत्फलेन सम्बन्धस्तस्मात्कर्मातिशायनः ॥ ३० ॥

२ ज्यादीनां वैदिककर्मांगताधि०—१३॥

शेषाः प्रकरणेऽविशेषात्सर्वकर्म-

णाम् ॥ ३१ ॥ होमास्तु व्यवतिष्ठे-
रन्नाहवनीयसंयोगात् ॥ ३२ ॥ शेष-
श्च समाख्यानात् ॥ ३३ ॥

२ वैदिकाश्वप्रतिग्रहे इष्टिकर्तव्यता०—१४॥

दोषात्त्विष्टिर्लौकिके स्याच्छास्त्रा-
द्धि वैदिके न दोषः स्यात् ॥ ३४ ॥
अर्थवादो वाऽनुपपातात्तस्माद्यज्ञे प्र-
तीयेत ॥ ३५ ॥

२ अश्वदातुर्वारुणीष्ट्याधि०—१५ ॥

अचोदितं च कर्मभेदात् ॥ ३६ ॥
सा लिंगादार्त्विजे स्यात् ॥ ३७ ॥

२ वैदिकसोमपानव्यापदधि०—१६ ॥

पानव्यापच्च तद्वत् ॥ ३८ ॥ दो-

षात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात् ॥ ३९ ॥

१ सौमेन्द्रचरोर्यजमानपानव्यापद्विषयताधिकरणम्--१७ ॥

तत्सर्वत्राविशेषात् ॥ ४० ॥ स्वामिनो वा तदर्थत्वात् ॥ ४१ ॥ लिंगदर्शनाच्च ॥ ४२ ॥

१ आग्नेयाष्टाकपालचरोद्व्यवदानमात्रस्य होतव्यताधिकरणम्०--१८ ॥

सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ४३ ॥ निरवदानात्तु शेषः स्यात् ॥ ४४ ॥ उपायो वा तदर्थत्वात् ॥ ४५ ॥

कृतत्वात्तु कर्मणः सकृत्स्याद्द्रव्यस्य गुणभूतत्वात् ॥ ४६ ॥ शेषदर्शनाच्च ॥ ४७ ॥

२ सर्वशेषैः स्विष्टकृदनुष्ठानाधि०— १९ ॥

अप्रयोजकत्वादेकस्मात्क्रियेरञ्छेषस्य गुणभूतत्वात्॥४८॥ संस्कृतत्वाच्च ॥ ४९ ॥ सर्वेभ्यो वा कारणाविशेषात्संस्कारस्य तदर्थत्वात् ॥ ५० ॥ लिंगदर्शनाच्च ॥ ५१ ॥

१ प्राथमिकशेषात्स्विष्टकृदनुष्ठानाधि०—२०॥

एकस्माच्चेद्याथाकाम्यमविशेषात् ॥५२॥ मुख्याद्वापूर्वकालत्वात्॥५३॥

२ पुरोडाशविभागस्य भक्षार्थताधि०-२१॥

**भक्षाश्रवणाद्दानशब्दः परिक्रये॥५४॥ तत्संस्तवाच्च ॥ ५५ ॥ भक्षार्थो वा द्रव्ये समत्वात् ॥ ५६ ॥ व्यादेशाद्दानसंस्तुतिः ॥५[1]७॥(२१)॥३८॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने तृतीयस्याध्यायस्य ( निवीतोपवीतादिष्वर्थवादविधित्वादिनिर्णयहेतुकः श्रुत्यादीनां परस्परविरोधसदसद्भावविचारो नाम ) चतुर्थः पादः ॥ ३ ॥ ४ ॥

---

( १ ) अत्र पादे रामेश्वरपादविरचितसुबोधिन्याख्यवृत्त्या सह काश्यां संवत् १९५६ में मुद्रितपुस्तके दशमसूत्रमारभ्य पञ्चदशसंख्याक सूत्रपर्यन्तं सूत्रषट्कं भाष्ये नास्तीत्युक्तम् । अत्रत्वस्तीतितदपेक्षया संख्याधिक्यं सूत्रगणनायाम् ॥

२ ध्रुवाज्यादिभिः स्विष्टकृदादिशेषाननुष्ठानाधिकरणम्— १ ॥

आज्याच्च सर्वसंयोगात् ॥ १ ॥ कारणाच्च ॥ २ ॥ एकस्मिन्त्समवत्तशब्दात् ॥ ३ ॥ आज्ये च दर्शनात् स्विष्टकृदर्थवादस्य ॥ ४ ॥ अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥५॥ साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥ अक्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥७॥ चमसवदिति चेत् ॥८॥

---

( १ ) अवत्तत्वाच्चेतिक्वचित्पाठः ।

न चोदनाविरोधाद्धविःप्रकल्पनाच्च
॥ ९ ॥ उत्पन्नाधिकारात्सति सर्ववच-
नम् ॥ १० ॥ जातिविशेषात्परम्
॥ ११ ॥ अन्त्यमरेकार्थे ॥ १२ ॥

२साकं प्रस्थाय्ये शेषकर्माननुष्ठानाधि०-२॥

साकम्प्रस्थाय्ये स्विष्टकृदिडञ्च
तद्वत् ॥ १३ ॥

१ सौत्रामण्यां शेषकर्माननुष्ठानाधि०-३ ॥

सौत्रामण्यां च ग्रहेषु ॥ १४ ॥
तद्वच्च शेषवचनम् ॥ १५ ॥

२ सर्वपृष्ठेष्टौ स्विष्टकृदिडादीनां सकृद-
नुष्ठानाधिकरणम्-४ ॥

द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रिये-

रन् ॥ १६ ॥ अविभागाच्च शेषस्य सर्वान्प्रत्यविशिष्टत्वात् ॥ १७ ॥

१ ऐन्द्रवायवग्रहे द्विश्शेषभक्षणाधि०—८ ॥

ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षस्यात् ॥ १८ ॥

१ सोमे शेषभक्षणाधिकरणम्—६ ॥

सोमेऽवचनाद्भक्षो न विद्यते ॥ १९ ॥ स्याद्वाऽन्यार्थदर्शनात् ॥ २० ॥ वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः २१

१ चमसिनां शेषभक्षाधिकरणम्—७ ॥

चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥ २२ ॥

३ उद्गातॄणां सह सुब्रह्मण्येन भक्षा०-८॥

उद्गातृचमसमेकः श्रुतिसंयोगात् ॥ २३॥ सर्वे वा सर्वसंयोगात् ॥२४॥ स्तोत्रकारिणां वा तत्संयोगाद्बहुश्रुतेः ॥ २५ ॥ सर्वे तु वेदसंयोगात्कारणादेकदेशे स्यात् ॥ २६ ॥

२ ग्रावस्तुतोऽपि सोमभक्षणाधि०-९ ॥

ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् ॥ २७ ॥ हारियोजने वा सर्वसंयोगात् ॥ २८ ॥ चमसिनां वा सान्निधानात् ॥ २९ ॥ सर्वेषां तु विधित्वात्तदर्था चमसिश्रुतिः ॥ ३० ॥

२ वषट्करणस्य भक्षनिमित्तताधि०—१०॥

**वषट्काराच्च भक्षयेत् ॥ ३१ ॥**

२ होमाभिषवयोर्भक्षनिमित्तताधि०—११ ॥

**होमाऽभिषवाभ्यां च ॥ ३२ ॥**

२ वषट्कर्त्रादीनां चमसे सोमभक्षा०—१२॥

**प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे ॥ ३३ ॥ स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ॥ ३४ ॥ चमसे चान्यदर्शनात् ॥ ३५॥**

२ होतुः प्रथमभक्षाधिकरणम्—१३ ॥

**एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ ३६ ॥ होता वा मन्त्रवर्णात् ॥ ३७ ॥**

वचनाच्च ॥ ३८ ॥ कारणानुपूर्व्याच्च ॥ ३९ ॥

२ भक्षस्यानुज्ञापूर्वकत्वाधि०-१४॥

वचनादनुज्ञातभक्षणम् ॥ ४० ॥

१ वैदिकवचनेनानुज्ञापनाधि०-१५ ॥

तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् ॥ ४१ ॥

२ वैदिकवाक्येन प्रतिवचनाधि०-१६ ॥

तत्रार्थात्प्रतिवचनम् ॥ ४२ ॥

१ एकपात्राणामनुज्ञापनाधि०-१७ ॥

तदेकपात्राणां समवायात् ॥ ४३ ॥

---

(१) उपहूयस्वेति क्वचित्पाठः ।

२ स्वयं यष्टुर्भक्षास्तित्वाधि०—१८ ॥

याज्यापनयेनापनीतो भक्षः प्रव-रवत् ॥ ४४ ॥ यष्टुर्वा॰ कारणाग-मात् ॥ ४५ ॥ प्रवृत्तत्वात्प्रवरस्यान-पायः ॥ ४६ ॥

३ फलचमसस्येज्याविकारताधि०—१९ ॥

फलचमसो नैमित्तिको भक्षवि-कारः श्रुतिसंयोगात् ॥ ४७॥ इज्या-विकारो वा संस्कारस्य तदर्थत्वात् ॥ ४८ ॥ होमात् ॥ ४९ ॥ चमसैश्च तुल्यकालत्वात् ॥ ५०॥ लिंगदर्श-नाच्च ॥ ५१ ॥

२ ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम्—२० ॥

**अनुप्रसर्पिषु सामान्यात् ॥ ५२॥ ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥ (२०) ॥ ३९ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने तृतीयस्याध्यायस्य ( प्रतिपत्तिकर्मनिरूपणं नाम ) पञ्चमः पादः ॥ ३ ॥ ५ ॥

---

२ स्रुवादिषु खादिरताविधेः प्रकृतिगामिताधि० १ ॥

**सर्वार्थमप्रकरणात् ॥ १ ॥ प्रकृतौ वाऽद्विरुक्तत्वात् ॥ २ ॥ तद्वर्जं तु**

वचनप्राप्ते ॥ ३ ॥ दर्शनादिति चेत् ॥ ४ ॥ न चोदनैकार्थ्यात् ॥ ५ ॥ उत्पत्तिरिति चेत् ॥ ६ ॥ न तुल्यत्वात् ॥ ७ ॥ चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थः ॥ ८ ॥

२ सामिधेनीनां सप्तदशसंख्याया विकृतिगामिताधिकरणम्—२ ॥

प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ९ ॥

२ नैमित्तिकसाप्तदश्यस्य प्रकृतिगामिताधिकरणम्—३ ॥

नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥ १० ॥

२ आधानस्य पवमानेष्ट्यनङ्गताधि०-४॥

इष्ट्यर्थमग्न्याधेयं प्रकरणात्॥११॥ न वा तासां तदर्थत्वात् ॥ १२ ॥लिंगदर्शनाच्च ॥ १३ ॥

२ आधानस्य सर्वार्थताधिकरणम्--५ ॥

तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः ॥ १४॥ सर्वार्थं वाऽऽधानस्य स्वकालत्वात् ॥ १५ ॥

२ पवमानेष्टीनामसंस्कृतेऽग्नौ कर्तव्यताधिकरणम्--६॥

तासामग्निः प्रकृतितःप्रयाजवत्स्यात्॥१६॥न वा तासां तदर्थत्वात्१७

३ उपाकरणादीनामग्नीषोमीयधर्मता-
धिकरणम्—७ ॥

तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १८ ॥ स्थानाच्च पूर्वस्य ॥ १९॥ श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था ॥ २० ॥ तेनोत्कृष्टस्य कालविधिरिति चेत् ॥ २१ ॥ नैकदेशत्वात् ॥२२॥ अर्थेनेति चेत् ॥२३॥ न श्रुतिविप्रतिषेधात् ॥ २४ ॥ स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥ लिंगदर्शनाच्च॥ २६ ॥अचोदना गुणार्थेन ॥ २७ ॥

२ शाखाहरणादीनामुभयदोहधर्मता०-८॥

**दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २८ ॥ प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥ २९ ॥**

१ सादनादीनां सवनत्रयधर्मताधि०-९ ॥

**तद्वत्सवनान्तरे ग्रहाम्नानम् ३० ॥**

१ रशनात्रिवृत्त्वादीनां सर्वपशुधर्मताधिकरणम्-१० ॥

**रशना च लिंगदर्शनात् ॥ ३१ ॥**

१ अंश्वदाभ्ययोरपि सादनादिधर्मवत्त्वाधिकरणम्-११ ॥

**आराच्छिष्टमसंयुक्तमितरैः सन्नि-**

धानात् ॥ ३२ ॥ संयुक्तं वा तदर्थत्वा-
च्छेषस्य तन्निमित्तत्वात् ॥३३॥ निर्दे-
शाद्व्यवतिष्ठेत ॥ ३४ ॥

२ चित्रिण्यादीष्टकानामग्न्यंगताधि०—१२॥

अग्न्यंगमप्रकरणे तद्वत् ॥ ३५ ॥

२ अभिषवादीनां सोममात्रधर्मताधि०—१३

नैमित्तिकमतुल्यत्वादसमानविधा-
नं स्यात् ॥ ३६ ॥

१ प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधि० १४

प्रतिनिधिश्च तद्वत् ॥३७॥ तद्वत्
प्रयोजनैकत्वात् ॥ ३८ ॥ अशा-
स्त्रलक्षणत्वाच्च ॥ ३९ ॥

१ श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम्--१५ ॥

नियमार्था गुणश्रुतिः ॥ ४० ॥

२ दीक्षणीयादिधर्माणामग्निष्टोमांगताधिकरणम्--१६ ॥

संस्थास्तु समानविधानाः प्रकरणाविशेषात्॥४१॥ व्यपदेशश्च तुल्यवत् ॥ ४२ ॥ विकारास्तु कामसंयोगे नित्यस्य समत्वात् ॥ ४३ ॥ अपि वा द्विरुक्तत्वात्प्रकृतेर्भविष्यन्तीति४४ वचनात्तु समुच्चयः॥४५ ॥ प्रतिषेधाच्च पूर्वलिंगानाम् ॥ ४६ ॥ गुणविशेषा-

**देकस्य व्यपदेशः॥४७॥(१६)२७॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने तृतीयस्याध्यायस्य( अनारभ्याधीतनिरूपणं नाम ) षष्ठः पादः ॥ ३ ॥ ६ ॥

२ बर्हिरादीनां दर्शपौर्णमासतदंगोभयांगताधिकरणम्--१॥

**प्रकरणविशेषादसंयुक्तं प्रधानस्य॥१॥ सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥ २ ॥ आरादपीति चेत् ॥ ३ ॥ न तद्वाक्यं हि तदर्थत्वात्॥ ४ ॥ लिंगदर्शनाच्च ॥ ५ ॥**

२ स्वामिसंस्काराणां प्रधानार्थताधि०--२॥

**फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ ६ ॥**

२ सौमिकवेद्यादीनामंगप्रधानोभयांगताधिकरणम्--३ ॥

**चिकीर्षया च संयोगात् ॥ ७ ॥**

२ अभिमर्शनस्यांगप्रधानोभयांगताधिकरणम्--४ ॥

**तथाऽभिधानेन ॥ ८ ॥ तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ९॥ गुणाऽभिधानात्सर्वार्थमभिधानम् ॥ १० ॥**

---

(१) तद्युक्ते इत्याद्यग्रिमं नवमं सूत्रमेतत्सूत्रोत्तरमेतदधिकरणे रत्नमालायाम् । भाष्ये तु नैवम् ।

२ दीक्षादक्षिणयोः प्रधानार्थताधि०—५ ॥

दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ११ ॥ निवृत्तिदर्शनाच्च ॥ १२ ॥

२ अन्तर्वेदेर्यूपानंगताधिकरणम्—६ ।

तथा यूपस्य वेदिः ॥ १३ ॥ देशमात्रं वा शिष्टेनैकवाक्यत्वात् ॥ १४॥

२ हविर्धानस्य सामिधेन्यनंगताधि०—७॥

सामिधेनीस्तदन्वाहुरिति हविर्द्धानयोर्वचनात्सामिधेनीनाम् ॥ १५ ॥ देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ॥ १६॥ समाख्यानं च तद्वत्॥१७॥

२ अंगानामन्यद्वारानुष्ठानाधिकरणम्—८॥

शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्

तस्मात्स्वयं प्रयोगे स्यात् ॥ १८ ॥ उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात् ॥१९॥ अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि॥ २० ॥

१ परिक्रीतानामृत्विजां संख्याविशेषनियमाधिकरणम्-९ ॥

तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥ २१ ॥ अपि वा श्रुतिभेदात्प्रतिनामधेयं स्युः॥ २२ ॥ एकस्य कर्मभेदादिति चेत् ॥ २३ ॥ नोत्पत्तौ हि ॥ २४ ॥

१ चमसाध्वर्यूणां पृथक्त्वाधि०--१० ॥

चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥२५॥

१ चमसाध्वर्यूणां बहुत्वनियमाधि०--११ ॥

उत्पत्तौ तु बहुश्रुतेः ॥ २६ ॥

१ चमसाध्वर्यूणां दशत्वनियमा०--१२ ॥

दशत्वं लिंगदर्शनात् ॥ २७ ॥

१ शमितुरपृथक्त्वाधिकरणम्--१३ ॥

शमिता च शब्दभेदात् ॥ २८ ॥

प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २९ ॥

१ उपगस्यापृथक्त्वाधिकरणम्--१४ ॥

उपगाश्च लिंगदर्शनात् ॥ ३० ॥

१ सोमविक्रेतुः पृथक्त्वाधिकरणम्--१५ ॥

विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ ३१ ॥

२ऋत्विगिति नाम्नोऽसर्वगामिताधि--१६॥

कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ ३२ ॥ न वा परिसङ्ख्यानात् ॥३३ ॥ पक्षेणेति चेत् ॥३४॥ न सर्वेषामधिकारः ॥ ३५ ॥

१ दीक्षादक्षिणावाक्योक्तब्रह्मादीनामेव सप्तदशर्त्विक्त्वाधि०--१७ ॥

नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥३६॥ उक्त्वा च यजमा-

नत्वं तेषां दीक्षाविधानात् ॥ ३७ ॥

१ ऋत्विजां स्वामिसप्तदशत्वाधि०— १८॥

स्वामिसप्तदशाः कर्मसामान्यात् ३८

[ १ आध्वर्यवादिष्वध्वर्य्वादीनां कर्तृता-नियमाधि० १९ ]—[ १ अग्नेः प्रकृतिविकृति-सर्वार्थताधिकरणं च—२०॥ ]

ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ ३९ ॥ तत्संयोगात् कर्मणो व्यवस्था स्यात् संयोगस्या-र्थवत्त्वात् ॥ ४० ॥ तस्योपदेशसमा-

---

( १ ) "अग्नयश्च सर्वार्थाः स्वकालत्वात् " इत्यग्निमे-कदेशेनेत्यर्थः ॥

ख्यानेन निर्देशः ॥ ४१ ॥ तद्वच्च लिंगदर्शनम् ॥ ४२ ॥

२ समाख्याबाधनाधिकरणम्-२१ ॥

प्रैषाऽनुवचनं मैत्रावरुणस्योपदेशात् ॥ ४३ ॥ पुरोऽनुवाक्याधिकारो वा प्रैषसन्निधानात् ॥ ४४ ॥ प्रातरनुवाके च होतृदर्शनात् ॥ ४५ ॥

२ चमसहोमेऽध्वर्युचमसाध्वर्युकर्तृताधि०-२२

चमसांश्चमसाध्वर्यवः समाख्यानात् ॥ ४६ ॥ अध्वर्युर्वा तन्न्यायत्वात् ॥ ४७ ॥ चमसे चान्यदर्शनात् ॥ ४८ ॥ अशक्तौ ते प्रतीयेरन् ॥ ४९ ॥

२ श्येनवाजपेययोरनेककर्तृकताधि०—२३॥

**वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ ५० ॥ तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात्सहांगैरव्यक्तः शेषे॥ ५१ ॥( २३ ) ॥३८॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने तृतीयस्याध्यायस्य [ बहुप्रधानोपकारकप्रयाजादिनिरूपणं नाम ] सप्तमः पादः ॥ ३ ॥ ७ ॥

---

२ क्रयस्य स्वामिकर्मताधिकरणम्—१ ॥

**स्वामिकर्मपरिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥**

१ वरदानस्याध्वर्युकर्मताधि०-२ ॥

**वचनादितरेषां स्यात् ॥ २ ॥**

२ वपनादिसंस्काराणां याजमानताधिकरणम्-३ ॥

**संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ ३॥ याजमानास्तु तत्प्रधानत्वात्कर्मवत् ॥४॥ व्यपदेशाच्च ॥ ५ ॥ गुणत्वेन तस्य निर्देशः ॥ ६ ॥ चोदनां प्रति भावाच्च ॥ ७ ॥ अतुल्यत्वादसमानविधानाः स्युः ॥ ८ ॥**

२ तपसो याजमानताधिकरणम्—४ ॥

तपश्च फलसिद्धित्वाल्लोकवत् ॥ ९ ॥
वाक्यशेषश्च तद्वत् ॥ १० ॥
वचनादितरेषां स्यात् ॥ ११ ॥

२ लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मता-
धिकरणम्—५ ॥

गुणत्वाच्च वेदेन न व्यवस्था
स्यात् ॥ १२ ॥

२वृष्टिकामनायायाजमानताधिकरणम्—६॥

तथा कामोऽर्थसंयोगात् ॥ १३ ॥
व्यपदेशादितरेषां स्यात् ॥ १४ ॥

१ आयुर्दा इत्यादिमन्त्राणां याजमानता-
धिकरणम्-७ ॥

मन्त्राश्चाऽकर्मकरणास्तद्वत् ॥ १५ ॥
विप्रयोगे च दर्शनात् ॥ १६ ॥

१ द्व्याम्नातस्योभयप्रयोज्यताधिकरणम्-८ ॥

द्व्याम्नातेषूभौ द्व्याम्नानस्याऽर्थव-
त्त्वात् ॥ १७ ॥

१ अभिज्ञस्यैव वाचयितव्यताधिकरणम्-९ ॥

ज्ञाते च वाचनं न ह्यविद्वान्
विहितोऽस्ति ॥ १८ ॥

२ द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम्-१० ।

याजमाने समाख्यानात्कर्माणि याज

मानं स्युः ॥ १९ ॥ अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥ २० ॥

२ होतुराध्वर्यवकर्मानुष्ठातृत्वाधि०—११ ॥

विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ २१ ॥

१ प्रोक्षण्यासादनादीनामनाध्वर्यवताधिकरणम्—१२ ॥

प्रैषेषु च पराधिकरात् ॥ २२ ॥

१ प्रैषमंत्राणामाध्वर्यवत्वाधिकरणम्—१३ ॥

अध्वर्युस्तु दर्शनात् ॥ २३ ॥

गौणे वा कर्मसामान्यात् ॥ २४ ॥

१ करणमन्त्रेषु स्वामिफलस्याशासितव्यता-
धि०-वा वर्चोन्यायाधिकरणम्-१४ ॥

ऋत्विक्फलं करणेष्वर्थव-
त्त्वात् ॥ २५ ॥ स्वामिनो वा तदर्थ-
त्वात्॥ २६॥ लिंगदर्शनाच्च॥ २७॥

१ करणमन्त्रेषु कर्मार्थफलस्यर्त्विग्धर्मताधि-
करणम्-१५॥

कर्मार्थं तु फलं तेषां स्वामिनं प्रत्य
र्थवत्त्वात् ॥ २८ ॥

१ भद्रमित्यस्योभयगामिताधिकरणम्-१६॥

व्यपदेशाच्च ॥ २९ ॥

२ द्रव्यसंस्कारस्यांगप्रधानार्थताधिकरणम्—१७ ॥

द्रव्यसंस्कारः प्रकरणाऽविशेषात् सर्वकर्मणाम् ॥ ३० ॥ निर्देशात्तु विकृतावपूर्वस्याऽनधिकारः ॥ ३१ ॥

१ पवित्रस्य परिभोजनीयबर्हिषा कर्तव्यताधिकरणम्—१८ ॥

विरोधे[1] च श्रुतिविशेषादव्यक्तः शेषे[2] ॥ ३२ ॥

२ प्राकृतपुरोडाशादीनां निधानाधिकरणम्—१९ ॥

अपनयस्त्वेकदेशस्य विद्यमान-संयोगात् ॥ ३३ ॥

---

१ विरोधादिति वृत्तौ पाठः । २ क्तः शेष [illegible]

२ काम्येष्टिषूपांशुत्वधर्मस्य प्रधानार्थताधिकरणम्-२० ॥

विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥ मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ॥ ३५ ॥

२ श्येनाङ्गानां नवनीताज्यताधिकरणम्-२१ ॥

सान्निधानाविशेषादसम्भवे तदंगानाम् ॥ ३६ ॥ आधानेऽपि तथेति चेत् ॥ ३७ ॥ नाऽप्रकरणत्वादंगस्यातन्निमित्तत्वात् ॥ ३८ ॥

१ सर्वश्येनाङ्गानां नवनीताज्यता०-२२ ॥

तत्काले वा[1] लिंगदर्शनात् ॥ ३९ ॥

---

१ वेति वृत्तौ नास्ति ।

सर्वेषां वा विशेषात् ॥ ४० ॥ न्यायोक्ते लिंगदर्शनम् ॥ ४१ ॥

२ सवनीयानां मांसमयताधि०—२३ ॥

मांसं तु सवनीयानां चोदनाविशेषात् ॥ ४२ ॥ भक्तिरसन्निधावन्याय्येति चेत् ॥ ४३ ॥ स्यात्प्रकृतिलिंगाद्वैराजवत् ॥ ४४ ॥ ( २३ ) ॥ २४ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने तृतीयस्याध्यायस्य ( याजमाननिरूपणं नाम ) अष्टमः पादः ॥ ३ ॥ ८ ॥

समाप्तस्तृतीयोऽध्यायः ॥ ३ ॥



# अथ चतुर्थोऽध्यायः ॥

अत्र गोदोहनस्य पुरुषार्थत्वप्रयुक्तयाऽनुष्ठानं तु क्रत्वर्थत्वप्रयुक्तयेत्यादिकं निरूप्यते-

२ प्रतिज्ञाधिकरणम्-१ ॥

**अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥**

५ क्रत्वर्थपुरुषार्थलक्षणाधिकरणम्- २ ॥

( वर्णकानि चत्वारि )

**यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् ॥ २ ॥**

२ प्रजापतिव्रतानां पुरुषार्थताधि०- ३ ॥

**तदुत्सर्गे कर्माणि पुरुषार्थाय शा-**

---

१ कर्मणीति वृत्तौ पाठः ।

स्यानातिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात्क्रियायां पुरुषश्रुतिः ॥ ३ ॥ अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ॥ ४ ॥ अपि वा कारणाऽग्रहणे तदर्थमर्थस्याऽनभिसम्बन्धात् ॥ ५ ॥ तथा च लोकभूतेषु ॥ ६ ॥

२ यज्ञायुधानानुवादताधि०—४ ॥

द्रव्याणि त्वविशेषेणाऽऽनर्थक्यात् प्रदीयेरन् ॥ ७ ॥ स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात्तस्माद्यथाश्रुति स्युः ॥ ८ ॥ चोद्यन्ते चा-

र्थंकथांऽस्तु ॥९॥ लिङ्गदर्शनाच्च॥१०॥

२ पश्वेकत्वाधिकरणम्-८ ॥

तत्रैकत्वमयज्ञांगमर्थस्य गुणभूतत्वात् ॥ ११ ॥ एकश्रुतित्वाच्च॥१२॥ प्रतीयत इति चेत् ॥ १३ ॥ नाऽशब्दं तत्प्रमाणत्वात्पूर्ववत्॥ १४ ॥शब्दवत्तूपलभ्यते तदागमे हि तद्दृश्यते तस्य ज्ञानं हि यथाऽन्येषाम् ॥ १५॥ तद्वच्च लिंगदर्शनम् ॥ १६ ॥

१ पशुलिङ्गविवक्षाधिकरणम्-६ ॥

तथा च लिंगम् ॥ १७ ॥

१ चार्थकर्मास्त्विति वृत्तौ पाठः ।
२ नं यथेति वृत्तौ पाठः ।

२ आश्रयिणामदृष्टार्थताधिकरणम्—७॥

आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥ चोदनायां त्वनारम्भोऽविभक्तत्वान्न ह्यन्[1]येन विधीयते॥ १९॥ स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतत्वाऽऽश्रया[2]द्धि गुणीभावः ॥ २० ॥

१ प्रयुक्तिविचारप्रतिज्ञाधिकरणम्—८ ॥

[3]अर्थसमवैषम्यतोद्रव्यकर्मणाम्॥२१॥

---

१ ह्यनेनेति वृत्तौ पाठः।

२ याद्धीति वृत्तौ पाठः। क्वचिदन्यत्र याद्धीति पाठः।

३ अर्थेनेति वृत्तौ पाठः।

२ आमिक्षाप्रयुक्तताधिकरणम्-९ ॥
( वा-वाजिनन्याया० )

**एकनिष्पत्तेः सर्वं समं स्यात् ॥२२॥ संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥ २३ ॥ मुख्यशब्दाभिसंस्तवाच्च ॥ २४ ॥**

२ गवानयनस्य पदकर्माप्रयुक्तताधि०-१०॥

**पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥**

२ कपालानां तुषोपवापाप्रयुक्तताधि-०११

**अर्थाभिधानकर्म च भविष्यता**

---

१ शब्दसंस्तवेति वृत्तौ पाठः ।

संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २६ ॥

२ शकृल्लोहितयोः पशावप्रयोक्तृताधि० –१२ ॥

पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २७ ॥

२ पुरोडाशस्य स्विष्टकृदप्रयुक्तताधि० –१३ ॥

एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥ २८ ॥ निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥ न शेषसन्निधानात् ॥ ३० ॥ कर्मकार्यात् ॥ ३१ ॥ लिङ्गदर्शनाच्च ॥ ३२ ॥

२ अभिघारणे शेषधारणतत्पात्रयोरननुष्ठानाधिकरणम्-१४ ॥

अभिघारणे विप्रकर्षादनूयाजवत् पात्रभेदः स्यात् ॥ २३ ॥ न वा पात्रत्वादपात्रत्वं त्वेकदेशत्वात् ॥ २४ ॥ हेतुत्वाच्च सहप्रयोगस्य ॥ २५ ॥ अभावदर्शनाच्च ॥ २६ ॥ सति सव्यवचनम् ॥ २७ ॥ न तस्येति चेत् ॥ २८ ॥ स्यात्तस्य मुख्यत्वात् ॥ २९ ॥

२ समानयनस्याज्ये धर्मप्रयोजकताधिकरणम्-१५ ॥

समानयनं तु मुख्यं स्याल्लिङ्गदर्श-

नात् ॥ ४० ॥ वचने हि हेत्वसामर्थ्यम् ॥ ४१ ॥

२ औपभृतजौहवयोः क्रमेणोभयानुसमयार्थताधिकरणम्—१६ ॥

तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥ तत्र जौहवमनूयाजप्रतिषेधार्थम् ४३ ॥ औपभृतं तथेति चेत् ॥ ४४ ॥ स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥

२ उपभृति द्विचतुर्गृहीताचरणाधि०—१७ ॥

तदष्टसङ्ख्यं श्रवणात् ॥ ४६ ॥ अनुग्रहाच्च जौहवस्य ॥ ४७ ॥ द्वयोस्तु

१ सामर्थ्यं इति न्यायमालायां पाठः ।

हेतुसामर्थ्यं श्रवणं च समानयने ॥ ॥ ४८ ॥ ( १७ ॥ ३६ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने चतुर्थस्याध्यायस्य (प्रधानभूतामिक्षाद्रव्यानयनप्रयोजकेत्यादिप्रधानप्रयोजकत्वविचारो नाम )प्रथमः पादः ॥ ४ ॥ १ ॥

---

२ स्वरोश्छेदनाद्यप्रयोजकताधिकरणम्-१ ॥

स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ जात्यन्तराच्च शङ्कते ॥ २ ॥ तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥ शकलश्रुते-

---

( १ ) चशब्दरहितः पाठो वृत्तौ ।

॥ ४ ॥ प्रतियूपं च दर्शनात् ॥ ५ ॥
आदाने करोतिशब्दः ॥ ६ ॥

१ शाखाया आहार्यताधिकरणम्—२ ॥

शाखायां तत्प्रधानत्वात् ॥ ७ ॥

२ छेदनस्य शाखाप्रयुक्तताधिकरणम्—३ ॥

शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यात् ॥ ८ ॥ श्रुत्यपायाच्च ॥ ९ ॥

३ शाखाप्रहरणस्य प्रतिपत्तिकर्मताधि०—४ ॥

हरणे जुहोतिर्योगसामान्याद्द्रव्याणां

---

१ ने कर्मशब्द इति वृत्तौ पाठः ।
२ षम्यं तदिति न्यायमालायां पाठः ।
३ हरणे तु जु इतिन्यायमालायां पाठः ।

न्वार्थशेषत्वात् ॥ १० ॥ प्रातिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥ अर्थेऽपीति चेत् ॥ १२ ॥ न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १३ ॥

२ निनयनस्य प्रतिपत्तिकर्मताधिकरणम्-८ ॥

उत्पत्त्यसंयोगात्प्रणातानामाज्यवद्विभागः स्यात् ॥ १४ ॥ संयवनार्थानां[1] या प्रतिपत्तिरितरासां तत्प्रधानत्वात् ॥ १५ ॥

२ दण्डदानस्यार्थकर्मताधिकरणम्-६ ॥

प्रासनवन्मैत्रावरुणस्य[2] दण्डप्रदानं

---

१ र्नां वा प्रतीति न्यायमालायां पाठः ।

२ वरुणायेति न्यायमालायां पाठः ।

कृतार्थत्वात् ॥ १६ ॥ अर्थकर्म वा कर्तृसंयोगात्स्रग्वत्॥ १७ ॥ कर्मयुक्ते च दर्शनात् ॥ १८ ॥

१ प्रासनस्य प्रतिपत्तिकर्मताधिकरणम्—७॥

उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् ॥ १९ ॥

२ अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम्—८ ॥

सौमिके च कृतार्थत्वात्॥ २० ॥ अर्थकर्म वाऽभिधानसंयोगात्॥२१॥

प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थाऽवभृ-थश्रुतिः ॥ २२ ॥

२ कर्तृदेशकालविधीनां नियमार्थताधिक-रणम्–९ ॥

कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ २३ ॥ नियमार्थां वा पुनः[1] श्रुतिः ॥ २४ ॥

१ द्रव्यगुणविधानस्य नियमार्थताधि–१० ॥

तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसं-योगात् ॥ २५ ॥

---

१ पुनश्शब्दरहितः पाठो न्यायमालायाम् ।

१ अवघातादिसंस्कारविधानस्य नियमार्थताधिकरणम्--११ ॥

**संस्कारे च तत्प्रधानत्वात् ॥२६॥**

२ यागहोमस्वरूपनिरूपणाधिकरणम्--१२

**यजाति चोदनाद्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥ तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥२८॥ददातिरुत्सर्गपूर्वकः परस्वत्वेन सम्बन्धः ॥ २९ ॥**

२ बर्हिष आतिथ्यादिसाधारण्याधि०--१३॥

**विधेः कर्मापवर्गित्वादर्थान्तरे वि-**

---

१ इदं सूत्रं भाष्ये न्यायमालायां च नास्ति ।

धिप्रदेशः स्यात्॥ ३०॥ अपिवोत्पत्ति-संयोगादर्थसम्बन्धो विशिष्टानां प्रयोगैकत्वहेतुः स्यात्॥ ३१॥ १३॥ २८॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-दर्शने चतुर्थस्याध्यायस्य ( अप्रधानं वत्सा-पाकरणं शाखाच्छेदे प्रयोजकमित्याद्य-प्रधानप्रयोवतृत्वविचारो नाम )
द्वितीयः पादः ॥ ४ ॥ २ ॥

---

२ द्रव्यसंस्कारकर्मणां क्रत्वर्थताधिकरणम्—१॥

द्रव्यसंस्कारकर्मसु परार्थत्वात्फ-लश्रुतिरर्थवादः स्यात् ॥ १ ॥ उत्प-

त्वेश्चातत्प्रधानत्वात् ॥ २ ॥ फलं तु तत्प्रधानायाम् ॥ ३ ॥

२ नैमित्तिकानामनित्यार्थत्वाधिकरणम्–२॥

नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यात् ॥ ४ ॥

१ दध्यादेर्नित्यनैमित्तिकोभयार्थताधिकरणम्–३॥ ( संयोगपृथक्त्वन्यायः )

एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ५ ॥ शेष इति चेत् ॥ ६ ॥ नार्थपृथक्त्वात् ॥ ७ ॥

१ पयोव्रतादीनां क्रतुधर्मताधिकरणम्–४॥

द्रव्याणां तु क्रियार्थानां संस्कारः

---

१ इदं सूत्रं वृत्तौ नास्ति ।

क्रतुधर्मत्वात् ॥ ८ ॥ पृथक्त्वाद्व्यवतिष्ठेत ॥ ९ ॥

१ विश्वजिदादीनां सफलत्वाधिकरणम्-८॥
(विश्वजिन्न्याये)

चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत न ह्यशब्दं प्रतीयते॥ १० ॥ अपि वाऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्यैतार्थानामर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतोप्यसमर्थानामानन्तर्येप्यस-

१ धर्मः स्यादिति न्यायमालायां पाठः।
२ गम्यते अर्थानां ह्यर्थेति न्या० मा० पाठः।
३ र्थतोऽसीति वृत्तौ पाठः।
४ न्तर्येण समिति वृत्तौ पाठः॥

न्वन्धस्तस्माच्छ्रुत्येकदेशंस्सः ॥ ११ ॥
वाक्यार्थश्च गुणार्थवत् ॥ १२ ॥

१ विश्वजिदादीनामेकफलताधिकरणम्—६॥
(विश्वजिन्याये)

तत्सर्वार्थमनादेशात् ॥ १३ ॥
एकं वा चोदनैकत्वात् ॥ १४ ॥

१ विश्वजिदादीनां स्वर्गफलताधिकरणम्—७॥
(विश्वजिन्याये)

स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ १५ ॥ प्रत्ययाच्च ॥ १६ ॥

---

१ स इत्येतद्रहितः पाठो न्यायमालायाम् ।

१ रात्रिसत्रस्याऽऽर्थवादिकफलकताधिकरणम्-८ ॥ ( रात्रिसत्रन्याये )

क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः॥ १७ ॥ फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १८ ॥ अंगेषु स्तुतिः परार्थत्वात् ॥ १९ ॥

१ काम्यानां यथोक्तकाम्यफलकत्वाधिकरणम्- ९ ॥

काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञांगे क्रत्वर्थः ॥ २० ॥ वीते च कारणे नियमात् ॥ २१ ॥ कामो वा तत्संयोगेन चोद्यते ॥ २२ ॥ अंगे

**गुणत्वात् ॥ २३ ॥ वीते च[1] नियमस्तदर्थम् ॥ २४ ॥**

[2] दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम्–१०॥ ( दर्शपूर्णमासन्याये )

**सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥ फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २६ ॥**

[2] दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधि०–११॥ दर्शपूर्णमासन्याये–योगसिद्धिन्याये च। अथवा[2] काम्यानामैहिकामुष्मिकफल

---

१ चशब्दरहितः पाठो वृत्तौ।

२ इदं सूत्रद्वयं द्विधा व्याख्यायाधिकरणद्वय कल्पितं न्यायमालायाम्।

वत्त्वाधि०-१२ ॥ ( दर्शपूर्णमासन्याये-योग-सिद्धिन्याये च )

**तत्र सर्वेऽविशेषात् ॥२७॥ योग-सिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगात्[1] ॥२८॥**

२सौत्रामण्यादीनां चयनाद्यंगताधि०-१३॥

**समवाये चोदनासंयोगस्यार्थवत्त्वात्[2] ॥२९॥ कालश्रुतौ काल इति चेत् ॥३०॥ नासमवायात्प्रयोजनेन[3] ॥३१॥**

---

१ इदं सूत्रद्वयं वर्णकान्तरत्वेनापि व्याख्यातं भाष्ये, न्या०मा० च ।

२ योगित्वादिति न्यायमालायां पाठः ।

३ नेन स्यादिति न्यायमालायां पाठः ।

२ वैमृधादेः पौर्णमास्याद्यंगताधि०—१४॥

उभयार्थमिति चेत्॥ २२ ॥न श-
ब्दैकत्वात् ॥ २३ ॥ प्रकरणादिति
चेत् ॥२४॥नोत्पत्तिसंयोगात्॥२५॥

२ अनूयाजादीनामाग्निमारुतोर्ध्वकालता-
धिकरणम्—१५ ॥

अनुत्पत्तौ तु कालः स्यात्प्रयोज-
नेन सम्बन्धात् ॥ २६ ॥

२ सोमादीनां दर्शपूर्णमासोत्तरकालता-
द्यधिकरणम्—१६ ॥

उत्पत्तिकालविशये कालः स्याद्वा-
क्यस्य तत्प्रधानत्वात् ॥ २७ ॥

२ वैश्वानरेष्टेः पुत्रगतफलकत्वाधिक०—१७॥ ( जातेष्टिन्याये )

**फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥ २८ ॥**

२ वैश्वानरेष्टेर्जातकर्मोत्तरकालताधिकरणम् अथवा- १ वैश्वानरेष्टेराशौचोपगमोत्तरकालताधिकरणम् १८—१९ ॥ ( जातेष्टिन्याये )

**अंगानां तूपघातसंयोगो निमित्तार्थः ॥ २९ ॥**

२ सौत्रामण्याद्यंगानां स्वकालकर्तव्यताधिकरणम्—२० ॥

**प्रधानेनाभिसंयोगादंगानां मुख्य-**

---

( १ ) अत्र न्यायमालायां व्याख्याभेदेनाधिकरणभेद उक्तः ।

कालत्वम् ॥ ४० ॥ अपवृत्ते तु चोदना तत्सामान्यात्स्वकाले स्यात् ॥ ४१ ॥ ( २० ) ॥ ३२ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने चतुर्थस्याध्यायस्य ( जुह्वाः पर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिंतनं नाम ) तृतीयः पादः ॥ ४ ॥ ३ ॥

---

२ राजसूयेज्यानां देवनाद्यंगकत्वाधि०—१ ॥

प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥ अपि वाऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् ॥ २ ॥

---

( १ ) अमीति न्या०मा० पाठः ।

१ देवनस्य कृत्स्नराजसूयांगताधिकरणम् २ ॥

मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥ सर्वासां वा समत्वाच्चोदनातः स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥

२ सौम्यादीनामुपसत्कालकत्वाधि०-३ ॥

प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥ अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ॥ ६ ॥

१ आसनहोमानां सांग्रहण्यंगताधि०-४ ॥

फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥

२ दधिग्रहस्य नित्यताधिकरणम्—५ ॥

दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥ नित्यश्च ज्यैष्ठ्यशब्दत्वात् ॥ ९ ॥ सार्वरूप्याच्च ॥ १० ॥ नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसम्बन्धाद्भङ्गित्वाच्चान्तरायस्य ॥ ११ ॥

१ वैश्वानरस्य नैमित्तिकत्वाधिकरणम्—६ ॥

वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात् ॥ १२ ॥ पक्षे वोत्पन्नसंयोगात् ॥ १३ ॥

१ षष्ठचितेर्नैमित्तिकत्वाधिकरणम्—७ ॥

षट्चितिः पूर्ववत्स्यात् ॥ १४ ॥

---

१ छशब्दादिति न्यायमालायां पाठः ।

२ त्वादिति न्यायमालायां पाठः ।

ताभिश्च तुल्यसंख्यानात् ॥ १५ ॥ अर्थवादोपपत्तेश्च ॥ १६ ॥ एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १७ ॥ विप्रतिषेधात्ताभिः समानसंख्यंत्वम् ॥ १८ ॥

१ पिण्डपितृयज्ञस्यानंगताधिकरणम्—८॥

पितृयज्ञः स्वकालत्वानंग स्यात् ॥ १९ ॥ तुल्य[2]वच्च प्रसंख्यानात् ॥ २० ॥ वि[3]प्रतिषिद्धे च दर्शनात् ॥ २१ ॥

---

१ सङ्ख्यमिति न्यायमालायां पाठः ।

२ वत्मसमिति न्यायमालायां पाठः ।

३ विशब्दरहितः पाठो न्या० मा० ।

१ रशनाया यूपांगताधिकरणम्—९ ॥

पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २२ ॥ यूपांगं वा तत्संस्कारात् ॥ २३ ॥ अर्थवादश्च तदर्थवत् ॥ २४ ॥

१ स्वरोः पश्वंगताधिकरणम्—१० ॥

स्वरुश्चाप्येकदेशत्वात् ॥ २५ ॥ निष्क्रयश्च तदंगवत् ॥ २६ ॥ पश्वंगं वार्थकर्मत्वात् ॥ २७ ॥ भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥

१ आघारादीनामंगताधिकरणम्—११ ॥

दर्शपूर्णमासयोरिज्याः प्रधाना-

---

१ वाक्यार्थत्वादिति न्या॰मा॰ पाठः ।

न्यविशेषात् ॥ २९ ॥ अपि वांगानि कानि चिद्येष्वंगत्वेन संस्तुतिः सामा- न्यादभिसंस्तवः ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥ अविशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमा- नत्वात् ॥ ३२ ॥ नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३३ ॥ पृथक्त्वे त्वभि- धानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वं तत्स- न्निधावसंयुक्तं तदङ्गं स्याद्भागित्वात्का-

---

१ सामान्योऽभिसम्बन्ध इति न्या० मा० पाठः ।

रणस्याश्रुतेश्चान्यसम्बन्धः ॥ ३४ ॥ गुणाश्च नामसंयुक्ता विधीयन्ते नांगेषूपपद्यन्ते ॥ ३५ ॥ तुल्या च कारणश्रुतिरन्यैरंगाभिसम्बन्धैः[2] ॥ ३६ ॥ उत्पत्तावाभिसम्बन्धस्तस्मादंगोपदेशः स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥ ३८ ॥

१ ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् — १२ ॥

ज्योतिष्टोमे तुल्यान्यविशिष्टं हि

---

१ श्रुतश्चेति न्या० मा० पाठः ।

२ ङ्गाङ्गिसम्बन्धैरिति न्या० मा० पाठः ।

कारणम् ॥ ३९ ॥ गुणानां तूत्पत्तिवाक्येन सम्बन्धात्कारणश्रुतिस्तस्मात्सोमः प्रधानं स्यात् ॥ ४० ॥ तथा चान्यार्थदर्शनम् ॥ ४१ ॥ ( १२ ) १९ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने चतुर्थस्याऽध्यायस्य ( राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्तनं नाम ) चतुर्थः पादः ॥ ४ ॥ ४ ॥

॥ चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥



# अथ पञ्चमोऽध्यायः ॥

अत्र क्रमनियतिविधेयत्वादिकं निरूप्यते—

४ क्रमनियमनिरूपणाधिकरणम् ०—१

( श्रुतिबलीयस्त्वन्यायः )

**श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥**

२ क्रमस्य क्वचिदार्थिकत्वाधि०— २ ॥

**अर्थाच्च ॥ २ ॥**

१ क्रमस्य क्वचिदनियमाधि०— ३ ॥

**अनियमोऽन्यत्र ॥ ३ ॥**

---

१ तत्प्रधानत्वोति न्या० मा० पाठः ।

१ क्रमस्य क्वचित्पाठानुसारिताधिकरणम्–४॥
( पाठक्रमन्यायः )

क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥ अशाब्द[१] इति चेत्स्याद्वाक्यशब्दत्वात् ॥ ५ ॥ अर्थ-कृते[२] चाऽनुमानं स्यात्क्रत्वेकत्वे परार्थ-त्वात्स्वेन त्वर्थेन सम्बन्धस्तस्मात्स्व-शब्दमुच्यते ॥ ६ ॥ तथा चान्यार्थ-दर्शनम् ॥ ७ ॥

२ क्रमस्य क्वचित्प्रथमप्रवृत्त्यनुसारिताधि-करणम्–५ ॥ ( प्रावृत्तिकक्रमन्यायः )

प्रवृत्त्या तुल्यकालानां गुणानां

१ अशाब्दमितीति वृत्तिकृत्पाठः ।
२ कृते वान्विति न्या० मा० पाठः ।

तदुपक्रमात् ॥ ८ ॥ सर्वमिति चेत् ॥९॥ नाकृतत्वात् ॥ १० ॥क्रत्वन्तरवदिति चेत् ॥ ११ ॥ नासमवायात् ॥ १२ ॥

२ क्रमस्य क्वचित्स्थानाऽनुसारिताधि०—६ ॥

स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥

२ अङ्गक्रमस्य मुख्यक्रमानुसारिताधि०—७॥

मुख्यक्रमेण चांगानां तदर्थत्वात् ॥ १४ ॥

२ अङ्गेषु मुख्यक्रमापेक्षया पाठक्रमस्य बलवत्त्वाधिकरणम्—८ ॥

प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १५ ॥

---

१ णवांगेति जै० न्या० मा० पाठः।

२ ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वाधिकरणम्- ९ ॥

**मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः॥ १६॥**

२प्रयोगवचनाच्चोदकस्य बलवत्त्वाधि०-१०॥

**तद्वचनाद्विकृतौ यथाप्रधानं स्यात् ॥ १७ ॥ विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥ १८ ॥**

२ विकृतौ क्वचित्प्रकृतिधर्मानातिदेशाधिकरणम्- ११ ॥

**विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथा शिष्टम् ॥ १९ ॥ अपि**

वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात्प्रकृतिधर्मलोपः स्यात् ॥ २० ॥ कालोत्कर्ष इति चेत्॥२१॥ न तत्सम्बन्धात् ॥२२॥

२ अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम्—१२ ॥ ( तदादितदन्तन्यायः— )

अंगानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात्॥२३॥ तदादि वाभिसम्बन्धात्तदन्तमपकर्षे स्यात् ॥२४ ॥

२ प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभावताधिकरणम्— १३ ॥

प्रवृत्त्या कृतकालानाम् ॥ २५ ॥

**शब्दाविप्रतिषेधाच्च ॥ २६ ॥**

२ वैकृतयूपकर्ममात्रापकर्षाधिकरणम्—१४॥
( यूपकर्मन्यायः )

**असंयोगात्तु वैकृतं तदेव प्रति-कृष्येत ॥ २७ ॥**

२ दाक्षिणाग्निकहोमानपकर्षाधि०— १५ ॥

**प्रासंगिकं च नोत्कर्षेदसंयो-गात् ॥ २८ ॥**

२ पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षा-धिकरणम्— १६ ॥

**तथाऽपूर्वम् ॥ २९ ॥**

२ सान्तपनीयाया अग्निहोत्रानुत्कर्षकता-
धिकरणम्-१७ ॥

सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनव-
द्वैगुण्यात् ॥ २० ॥ अव्यवायाच्च ॥ २१ ॥
असम्बन्धात्तु नोत्कर्षेत् ॥ २२ ॥
प्रापणाच्चनिमित्तस्य ॥ २३ ॥
सम्बन्धात्सवनोत्कर्षः ॥ २४ ॥

२ उक्थ्यानुरोधेन षोडश्युत्कर्षाधि०-१८ ॥

षोडशी चोक्थ्यसंयोगात् ॥ २५ ॥
(१८) २६ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-
दर्शने पञ्चमस्याऽध्यायस्य (श्रुत्यर्थपा-
ठादिभिः क्रमनियमनिरूपणं
नाम) प्रथमः पादः ॥ ५ ॥ १ ॥

२ वाजपेयपशूनां सर्वेषामेकदौपाकरणादि-
धर्मानुष्ठानाधि०-१॥ (पदार्थानुसमयन्यायः)

**सन्निपाते प्रधानानामेकैकस्य गु-
णानां सर्वकर्म स्यात् ॥ १ ॥ सर्वेषां
वैकजातीयं कृतानुपूर्व्यत्वात् ॥ २॥**

१ सहस्राश्वप्रतिग्रहस्थले एकैकस्यैकदा सर्व-
धर्मानुष्ठानाधि०-२॥(काण्डानुसमयन्यायः)

**कारणादभ्यावृत्तिः ॥ ३ ॥**

२ मुष्टिकपालादीनां समुदायानुसमयाधिक-
रणम्-३ ॥

**मुष्टिकपालावदानाञ्जनाभ्यञ्जन-**

---

१ पर्वत्वेति जै० न्यायमालाधृतपाठः ।

वपनप्लावनेषु चैकेन ॥ ४ ॥ सर्वाणि[1] त्वेककार्यत्वादेषां तद्गुणत्वात् ॥ ५ ॥
२ अवदानस्य प्रदानान्तानुसमयाधि०—४ ॥
संयुक्ते तु प्रक्रमात्तदङ्गं[2] स्यादितरस्य तदर्थत्वात् ॥ ६ ॥
वचनात्तु परिव्याणान्तमञ्जनादिः
१ अञ्जनादेः परिव्याणान्तानुसमयाधि०—८
स्यात् ॥ ७ ॥ कारणाद्वा[3] (न) वसर्गस्याद्यथा पात्रवृद्धिः ॥ ८ ॥ न वा शब्दकृतत्वान्न्यायमात्रामितरदर्थात्पात्रविवृद्धिः[4] ॥ ९ ॥

---

१ सर्वाणि वैकेति वृत्तिकृत्पाठः २ त्तदन्तमिति वृत्तौ पाठः।

३ द्वावसर्गं इति वृत्तौ पाठः।

४ त्रवृद्धिरीति वृत्तौ पाठः।

२ दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ०—६ ॥

पशुगणे तस्यतस्यापवर्जयेत्पश्वेकत्वात् ॥ १० ॥ दैवतैर्वैककर्म्यात् ॥ ११ ॥ मन्त्रस्य चार्थवत्त्वात् ॥ १२ ॥

२ नानाबीजेष्टावुलूखलादीनां तन्त्रताधिकरणम् ०—७ ॥

नानाबीजे[1] एकमुलूखलं विभवात् ॥ १३ ॥ विवृद्धिर्वा नियमादानुपूर्व्यस्य तदर्थत्वात् ॥ १४ ॥ एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥

---

१ जेष्वे इति जै० न्या० मा० पाठः ।

२ अग्नीषोमीयपशौ प्रयाजानूयाजयोः पात्र-
भेदाधिकरणम्—८ ॥

**विकारे त्वनूयाजानां पात्रभेदोऽर्थ-
भेदात् ॥ १६ ॥**

२ नारिष्टहोमस्योपहोमपूर्वताधिकरणम्—९ ॥
( नारिष्टन्यायः )

**प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न
ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥
मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुति-
त्वादशब्दत्वात्प्राकृतानां व्यवायः
स्यात् ॥ १८ ॥ अन्ते तु बादरायण
स्तेषां प्रधानशब्दत्वात् ॥ १९ ॥
तथा चान्यार्थदर्शनम् ॥ २० ॥**

२ विदेवनादीनामभिषेकपूर्वताधिकरणम्-१०॥

**कृतदेशात्तु पूर्वेषां स देशः स्यात्तेनप्रत्यक्षसंयोगान्न्यायमात्रमितरत्॥२१॥**

१ सावित्रहोमादीनां दीक्षणीयापूर्वप्रयोगाधिकरणम्०– ११ ॥

**प्राकृताच्च पुरस्तायत् ॥ २२ ॥**

१ याजमानसंस्काराणां रुक्मप्रतिमोकात् पूर्वभावित्ताधिकरणम्–१२ ॥

**सन्निपातश्चेद्यथोक्तमन्ते स्यात्॥२३॥ (१२) ॥ २१ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने पञ्चमस्याध्यायस्य (वाजपेयेषु सप्तदशपशुष्वेकैकधर्मसमापनमित्यादिक्रमविशेषनिरूपणं नाम ) द्वितीयः पादः॥५॥२॥



२ प्रयाजादीनामेकादशादिसंख्यायाः सर्व-
संपाद्यताधिकरणम्—१ ॥

विवृद्धिः कर्मभेदात्पृषदाज्यवत्त-
स्य तस्योपदिश्येत ॥ १ ॥ अपि वा
सर्वसङ्ख्यत्वाद्विकारः प्रतीयेत ॥२ ॥

२ प्रथमोपसत्त्रयस्य स्वस्थानावृत्त्याधि०—२॥

स्वस्थानात्तु विवृध्येरन्कृतानुपूर्व्य-
त्वात् ॥ ३ ॥

२ सामिधेनीष्वागन्तूनामन्ते निवेशाधिक-
रणम्—३ ॥

समिध्यमानवतीं समिद्धवतीं चान्त-
रेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले
समर्हणात् ॥४ ॥ तच्छन्दा वा ॥५॥

उष्णिक्ककुभोरन्ते दर्शनात् ॥ ६ ॥

१ बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताधिकरणम्-४ ॥

स्तोमविवृद्धौ पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ७ ॥ पर्यास इति चाऽन्ताख्या ॥ ८ ॥ अन्ते वा तदुक्तम् ॥ ९ ॥ वचनात्तु द्वादशाहे ॥ १० ॥ अतद्विकारश्च ॥ ११ ॥ तद्विकारेऽप्यपूर्वत्वात् ॥ १२ ॥

१ बहिष्पवमान एवागन्तूनां साम्नां मध्ये निवेशाधिकरणम्-९ ॥

अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥

अपि वा गायत्रीबृहत्यनुष्टुप्सु वच-
नात् ॥ १४ ॥

२ ग्रहेष्टकादीनां क्रत्वग्निशेषताधि०— ६ ॥

ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः
स्यात् ॥ १५ ॥ क्रत्वग्निशेषा वा
चोदितत्वादचोदना तु पूर्वस्य ॥१६॥

१ चित्रिण्यादीनां मध्यमचितावुपधानाधि-
करणम्— ७ ॥

अन्ते स्युरव्यवायात् ॥ १७ ॥
लिङ्गदर्शनाच्च ॥ १८ ॥ मध्यमायां
तु वचनाद्ब्राह्मणवत्यः ॥ १९ ॥

१ लोकम्पृणातः पूर्वं चित्रिण्याद्युपधानाधिकरणम्-८ ॥

प्राग्लोकम्पृणायास्तस्याः सम्पूरणार्थत्वात् ॥ २० ॥

२ इष्टिसंस्कृतेऽग्नावग्निहोत्राद्यनुष्ठानाधि०-९ ॥

संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ २१ ॥ अनन्तरं च व्रतं तद्भूतत्वात् ॥२२॥ पूर्वं च लिंगदर्शनात् ॥ २३ ॥ अर्थवादो वाऽर्थस्य विद्यमानत्वात् ॥ २४ ॥ न्यायविप्रतिषेधाच्च ॥ २५ ॥

१ अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठाना-
धिकरणम्—१० ॥

सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमि-
त्तस्य ॥ २६ ॥ क्रत्वन्ते वा प्रयोगव-
चनाभावात् ॥ २७ ॥ अग्नेः कर्मत्व-
निर्देशात् ॥ २८ ॥

१ दीक्षाया इष्टसिद्धिताधि०—११ ॥

परेणाऽवेदनाद्दीक्षितः स्यात्सर्वैर्दी-
क्षाभिसम्बन्धात् ॥ २९॥ इष्ट्यन्ते वा
तदर्था ह्यविशेषार्थसम्बन्धात् ॥३०॥
समाख्यानं च तद्वत् ॥ ३१ ॥

१ काम्येष्टीनामनियमेनानुष्ठानाधि०—१२॥

अङ्गवत्क्रतूनामानुपूर्व्यम्॥३२॥ न

वाऽसम्बन्धात् ॥ ३३ ॥ काम्यत्वाच्च ॥३४॥आनर्थक्यान्नेति चेत् ॥३५॥ स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३६ ॥

२ यज्ञानामग्निष्टोमपूर्वताधिकरणम्-१३ ॥

य एतेनेत्यग्निष्टोमःप्रकरणात् ॥३७॥ लिङ्गाच्च ॥ ३८ ॥

१ ज्योतिष्टोमादिविकाराणामग्निष्टोमपूर्वकताधिकरणम्- १४ ॥

अथान्येनेति संस्थानां सन्निधानात् ॥ ३९ ॥ तत्प्रकृतेर्वाऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ४० ॥

प्रशंसा च विहरणाभावात् ॥ ४१ ॥
विधिप्रत्ययाद्वा न ह्येकस्मात्प्रशंसा स्यात् ॥ ४२ ॥

१ एकानेकस्तोमकानां सर्वेषामग्निष्टोमपूर्वकताधिकरणम्– १८ ॥

एकस्तोमो वा क्रतुसंयोगात् ॥ ४३ ॥
सर्वेषां वा चोदनाविशेषात्प्रशंसा स्तोमानाम् ॥ ४४ ॥ ( १८ ) ॥ २१ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने पञ्चमस्याध्यायस्य ( पञ्चप्रयाजादीनामावृत्त्या वृद्धिरदाभ्यादीनामनावृत्त्या तदभाव इत्यादि निरूपणं नाम ) तृतीयः पादः ॥ ५ ॥ ३ ॥

२-पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधि०—१॥

क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

२ मुख्यक्रमेणाग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकरणम्—२ ॥

अवदानाभिधारणाऽऽसादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥ यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥ लिंग दर्शनाच्च ॥ ४ ॥

१ इष्टिसोमयोः पौर्वापर्यानियमाधि०—३॥

वचनादिष्टिपूर्वत्वम् ॥ ५ ॥ सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्राऽतिक्रमवचनात्



तदर्थेनानर्थकं हि स्यात् ॥ ६ ॥ तदर्थवचनाच्च नाविशेषात्तदर्थत्वं स्यात् ॥ ७ ॥ अयक्ष्यमाणस्य च पवमानहविषां कालविधानादानन्तर्याद्विशङ्का स्यात् ॥ ८ ॥ इष्टिरयक्ष्यमाणस्य तादर्थ्ये[1] न सोमपूर्वत्वम् ॥ ९ ॥

१ ब्राह्मणस्यापीष्टिसोमयोः पौर्व्यापर्यानियमाधिकरणम्— ४ ॥

उत्कर्षाद्ब्राह्मणस्य सोमः स्यात् १० ॥ पौर्णमासी वा श्रुतिसंयोगात् ॥ ११ ॥ सर्वस्य चैककर्मत्वात् ॥ १२ ॥ स्याद्वा

१ तादर्थ्ये सोमेति जै०न्या०पाठः ।

विधिस्तदर्थेन ॥ १३ ॥ प्रकरणात्
कालः स्यात् ॥ १४ ॥

१ सोमकालबाधाधिकरणम्—५ ॥

स्वकाले स्यादविप्रतिषेधात्॥ १५
अपनयो वाऽऽधानस्य सर्वकालत्वात्
॥ १६॥ पौर्णमास्यूर्ध्वं सोमाद्ब्राह्मण
स्य वचनात् ॥ १७ ॥ एकं वा शब्द
सामर्थ्यात्प्राक् कृत्स्नविधानम्॥ १८ ॥

१ आज्यस्य सोमादनुत्कर्षाधि०—६ ॥

पुरोडाशस्त्वनिर्देशे तद्युक्ते दे
ताभावात् ॥ १९ ॥ आज्यमपी



चेत् ॥ २० ॥ न मिश्रदेवतात्वादै-
न्द्राग्नवत् ॥ २१ ॥

१ विकृतानामैन्द्राग्नादीनां सद्यस्कालताधि-
करणम्—७ ॥

विकृतेः प्रकृतिकालत्वात्सद्यस्का-
लोत्तरा तातिस्तयोः प्रत्यक्षशिष्ट-
त्वात्॥२२॥द्वैयहकाल्ये तु यथान्या-
यम् ॥ २३ ॥ वचनाद्वैककाल्यं
स्यात् ॥ २४ ॥

१ सोमात्सान्नाय्यविकारादीनामुत्कर्षा-
धिकरणम्—८ ॥

सान्नाय्याग्नीषोमीयविकारादूर्ध्वं
सोमात्प्रकृतिवत् ॥ २५ ॥

१ सोमविकाराणां दर्शपूर्णमासाभ्यां प्रागकर्तव्यताधिकरणम्—९ ॥

**तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २ ॥ ( ९ ) ॥ ११ ॥**

श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने पञ्चमस्याध्यायस्य ( क्रमनियामकश्रुत्यर्थपाठादीनां प्राबल्यदौर्बल्यविचारो नाम )
चतुर्थः पादः ॥ ५ ॥ ४ ॥
॥ पञ्चमोऽध्यायः संपूर्णः ॥



# अथ षष्ठोऽध्यायः ॥

अत्र अन्धादिभिन्नस्य कर्तुरधिकार-
विचारो निरूप्यते—

## २ यागादिकर्मणां स्वर्गादिफलसाधनता-
धिकरणम्—१ ॥

**द्रव्याणां कर्मसंयोगे गुणत्वेनाऽभि-
सम्बन्धः ॥ १ ॥ असाधकं तु ताद-
र्थ्यात् ॥२ ॥ प्रत्यर्थं चाऽभिसंयोगात्
कर्मतो ह्यभिसम्बन्धस्तस्मात्कर्मोप-
देशः स्यात् ॥ ३ ॥**

## २ अशक्तानामधिकारनिराकरणाधि०—२॥

**फलार्थत्वात्कर्मणः शास्त्रं सर्वाधि-**

कारं स्यात् ॥ ४॥ कर्तुर्वा श्रुतिसंयोगाद्विधिः कात्स्न्र्येन गम्यते ॥ ५ ॥

२ स्त्रिया अनधिकारनिराकरणाधि०—३॥

लिंगविशेषनिर्देशात्पुंयुक्तमैतिशायनः ॥ ६ ॥ तदुक्तित्वाच्च दोषश्रुतिरविज्ञाने ॥ ७ ॥ जातिं तु बादरायणोऽविशेषात्तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याऽविशिष्टत्वात् ॥ ८ ॥ विभक्त्येति चेन्न ॥ ९ ॥ चोदितत्वाद्यथाश्रुति ॥ १० ॥ द्रव्यवत्त्वात्तु पुंसां स्याद्द्रव्यसंयुक्तं क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगि-

त्वात् ॥ ११ ॥ तथा चाऽन्यार्थदर्शनम् ॥ १२ ॥ तादर्थ्यात्कर्मतादर्थ्यम् ॥ १३ ॥ फलोत्साहाऽविशेषात् १४ अर्थेन च समवेतत्वात् १५ ॥ क्रयस्य धर्ममात्रत्वम् ॥ १६ ॥

१ यागे दम्पत्योः सहाधिकाराधि०—४॥

स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ लिङ्गदर्शनाच्च ॥ १८ ॥ क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥ फलार्थित्वात्तु स्वामित्वेनाऽ-

१ भाष्ये अविशेषात्तु इति पाठः ।

भिसम्बन्धः ॥ २० ॥ फलवत्तां च दर्शयति ॥ २१ ॥

१ आधाने पुरुषद्वयादिकर्तृत्वानिराकरणाधिकरणम्-५ ॥

द्व्याधानं च द्वियज्ञवत् ॥ २२ ॥

गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् ॥ २३ ॥

१ पुंस एवोपस्थानाद्यधिकाराधि०-६ ॥

तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥

२ शूद्रस्यानधिकाराधिकरणम्-७ ॥

चातुर्वर्ण्यमविशेषात् ॥ २५ ॥

निर्देशाद्वा त्रयाणां स्यादग्न्याधेये सम्बन्धः क्रतुषु ब्राह्मणश्रुतेरित्यात्रेयः॥२६॥निमित्तार्थे च बादरिस्तस्मात्सर्वाधिकारः स्यात् ॥ २७ ॥ अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत॥२८॥निर्देशात्तु पक्षे स्यात्२९॥ वैगुण्यान्नेति चेत् ॥ ३० ॥ न काम्यत्वात् ॥ ३१ ॥ संस्कारे च तत्प्रधानत्वात् ॥ ३२ ॥ अपि व वेदनिर्देशादपशूद्राणां प्रतीयेत॥३३॥ गुणार्थित्वान्नेति चेत् ॥ ३४ ॥ सं-

(१) णार्थत्वेति वृत्तौ पाठः।

स्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥ ३५ ॥ विद्यानिर्देशान्नेति चेत् ॥३६॥ अवैद्यत्वादभावः कर्माणि स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥ ३८ ॥

१ निर्धनाधिकाराधिकरणम्—८ ॥

त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात्॥ ३९ ॥ अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः॥४०।

१ अंगहीनाधिकाराधिकरणम्—९ ॥

अंगहीनश्च तद्धर्मा ॥ ४१ ॥

१ अचिकित्स्यांगवैकल्यस्यानधिकाराधिकरणम्—१० ॥

उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥

१ दर्शपूर्णमासयोरत्र्यार्षेयस्यैवाधिकाराधिकरणम्—११ ॥

अत्र्यार्षेयस्य हानं स्यात् ॥४३॥

१ रथकाराधिकाराधिकरणम्—१२ ॥

वचनाद्रथकारस्याधाने सर्वशेषत्वात् ॥ ४४ ॥ न्यायो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् ॥ ४५ ॥ अकर्मत्वात्तु नैवं स्यात् ॥ ४६ ॥ आनर्थक्यं च संयोगात् ॥ ४७॥ गुणा-

र्थमिति चेत् ॥ ४८ ॥ उत्क्रमनिमित्तत्वम् ॥ ४९ ॥ सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन् ॥ ५० ॥

१ निषादस्थपत्यधिकरणम्— १३ ॥

स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ ५१ ॥ लिंगदर्शनाच्च ॥ ५२ ॥ ( १३ ) ॥ १८ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने षष्ठस्याध्यायस्य ( कर्माधिकारनिरूपणं नाम ) प्रथमः पादः ॥ ६ ॥ १ ॥

१ प्रत्येकस्य सत्रिणः फलसम्बन्धा०—१ ॥

पुरुषार्थैकसिद्धित्वात्तस्यतस्याधि-

कारः स्यात् ॥ १ ॥ अपि वोत्पत्तिसंयोगाद्यथा स्यात्सर्वदर्शनं तथाभावो विभागे स्यात् ॥ २ ॥

२ दर्शादौ कर्त्रैक्ये नियमाधिकरणम्—२॥

प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ ३ ॥ प्रत्यर्थं श्रुतिभाव इति चेत् ॥४॥ तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात्कर्तुःप्रधानभूतत्वात् ॥ ५ ॥ चोदनैकत्वात् ॥६॥ अपि वा कामसंयोगे सम्बन्धात् प्रयोगायोपादि-

१ त्सत्त्वदेति त्सवदेति च अपपाठः।

अन्यस्यादिति चेदित्येवं नञं विहायापि पाठो जै॰ न्या॰ मा॰।

इष्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणा-
वत्॥ ७ ॥ अन्यस्यापीति चेन्न॥८॥
अन्यार्थेनाभिसम्बन्धः ॥ ९ ॥ फल-
कामो निमित्तमिति चेत् ॥ १० ॥
न नित्यत्वात् ॥ ११ ॥ कर्म तथेति
चेत् ॥ १२ ॥ न समवायात्॥ १३॥

१ आरब्धकाम्यकर्मणोऽपि समाप्तिनियमा-
धिकरणम्— ३ ॥

प्रक्रमात्तु नियम्येतारम्भस्य क्रिया-
निमित्तत्वात् ॥१४॥ फलार्थित्वाद्वाऽ
नियमो यथानुपक्रान्ते ॥ १५ ॥ निय-

मो वा तन्निमित्तत्वात्कर्तुस्तत्का-
रणं स्यात् ॥ १६ ॥

१ लौकिककर्मणि आरब्धेपि समाख्यानिय-
माधिकरणम्— ४ ॥

लोके कर्मणि वेदवत्ततोऽधिपुरुषज्ञा-
नम् ॥ १७ ॥ अपराधेऽपि च तैःशा-
स्त्रम् ॥ १८ ॥ अशास्त्रात्तूपसम्प्राप्तिः
शास्त्रं स्यान्न प्रकल्पकं तस्मादर्थेन
गम्येताप्राप्ते शास्त्रमर्थवत् ॥ १९ ॥
दैवताश्रये च ॥ २० ॥

---

१ इदं सूत्रमाधिकं वृत्तिग्रन्थे पठ्यते, भाष्यग्रन्थे वार्ति-
कग्रन्थे जै० न्या० मा० च न दृश्यते ॥

२ प्रतिषिद्धकर्मणामनुष्ठानेऽनिष्टप्राप्त्यधि-
करणम्- ५ ॥

प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणाम् २१ शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयेत तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥ २२ ॥

१ गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधिकरणम्—६ ॥

तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ २३ ॥ अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ २४ ॥

१ अग्निहोत्रादियावज्जीवकर्मणां स्वकाल-
मात्रकर्तव्यताधिकरणम्—७ ॥

अभ्यासोऽकर्मशेषत्वात् पुरुषार्थो विधीयते ॥ २५ ॥ तस्मिन्नसंभवन्नर्थात् ॥ २६ ॥ न कालेभ्य उपदिश्यन्ते ॥ २७ ॥ दर्शनात्काललिंगानां कालविधानम् ॥ २८ ॥

१ अग्निहोत्रादीनां स्वकालावृत्त्यावृत्त्यधि-
करणम्—८ ॥

तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥ २९ ॥ तथा हि लिंगदर्शनम् ॥ ३० ॥

१ 'दर्शादौ भेदादिनिमित्तावृत्त्या होमावृत्त्यधिकरणम्-९ ॥

**तथान्तःक्रतुयुक्तानि ॥ ३१ ॥**

१ गुर्वनुगमादीनां प्रतिनिमित्तमावृत्त्यधिकरणम्- १० ॥

**आचाराद्गृह्यमाणेषु तथा स्यात्पुरुषार्थत्वात् ॥ ३२ ॥**

१ ऋणत्रयापाकरणस्य त्रैवर्ण्यानां नित्यताधिकरणम्- ११ ॥

**ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३३ ॥ (११) ॥ १३ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने षष्ठस्याध्यायस्य ( फलकर्त्रैक्यारब्ध-

समापनादिकर्तृधर्मनिरूपणं नाम )

द्वितीयः पादः ॥ ६ ॥ २ ॥

१ नित्ये यथाशक्त्यङ्गानुष्ठानाधि०— १ ॥

सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥ अपि वाऽप्येकदेशे स्यात्प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्र तदर्थत्वात् ॥ २ ॥ तदकर्माणि च दोषस्तस्मात्ततो विशेषःस्यात्प्रधानेनाऽभिसम्बन्धात् ॥ ३ ॥ कर्माऽभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यात् ॥ ४ ॥ अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥ ५ ॥ विध्यपराधे

च दर्शनात्समाप्तेः ॥ ६ ॥ प्रायश्चित्तविधानाच्च ॥ ७ ॥

२ अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणम्- २ ॥

काम्येषु चैवमार्थित्वात् ॥ ८ ॥ असंयोगात्तु नैवं स्याद्विधेः शब्दप्रमाणत्वात् ॥ ९ ॥ अकर्मणि चाप्रत्यवायात् ॥ १० ॥

१ द्रव्यभेदेऽपि कर्माभेदाधिकरणम्--३ ॥

क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यात् ॥ ११ ॥ अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैक-

कर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥

१ द्रव्यापचारे प्रतिनिधिना समापनाधिक-
रणम्--४ ॥

श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याऽशिष्टत्वात् ॥ १३ ॥ क्वचिद्विधानाच्च ॥ १४ ॥ आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥ नियमार्थः क्वचिद्विधिः ॥ १६ ॥ तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥

१ देवतामन्त्रक्रियापचारे प्रतिनिध्यभावा-
धिकरणम्--५ ॥

न देवताग्निशब्दक्रियमन्यार्थसंयो-

गात् ॥ १८ ॥ देवतायां च तदर्थत्वात् ॥ १९ ॥

१ प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणम्—६ ॥

प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ २० ॥

१ स्वामिनः प्रतिनिध्यभावाधिकरणम्—७॥

तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् ॥ २१ ॥

१ कस्यचित्स्वामिनोपचारे प्रतिनिध्यादानाधिकरणम्—८ ॥

बहूनां तु प्रवृत्तावन्यमागमयेद्वैगुण्यात् ॥ २२ ॥

---

(१) त्विदमस्य स्थाने चेति पाठो वृत्तिग्रन्थे ।

१ प्रतिनिहितस्यास्वामित्वाधि०—९ ॥

स स्वामी स्यात्संयोगात्॥ २३॥
कर्मकरो वा क्रीतत्वात् ॥ २४ ॥ त-
स्मिंश्च फलदर्शनात् ॥ २५ ॥

१ सत्रे प्रतिनिहितस्य यजमानधर्मग्राहिता-
धिकरणम्—१० ॥

स तद्धर्मा स्यात्तत्कर्मसंयोगात् २६॥

१ श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधि-
त्वाधिकरणम्—११ ॥

सामान्यं तच्चिकीर्षा हि ॥ २७ ॥

१ द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादा-
नाधिकरणम्—१२ ॥

निर्देशात्तु विकल्पे यत्प्रवृत्तम् २८
अशब्दमिति चेत् ॥ २९ ॥ नाऽन-

**ङ्गत्वात् ॥ ३० ॥ संस्कारश्च स्वादिरे कर्तव्याः ॥ ३१ ॥**

१ पूतिकस्य सोमप्रतिनिधित्वाधि०-१३॥

**वचनाच्चाऽन्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य॥३२॥**

१ प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य प्रतिनिधित्वाधिकरणम्-१४ ॥

**न प्रतिनिधौ समत्वात् ॥ ३३ ॥**

१ श्रुतस्यापि प्रतिनिधेरपचारे उपात्तसदृशस्य पुनःप्रतिनिधित्वाधिकरणम् १५-

**स्याच्छ्रुतिलक्षणे नियतत्वात् ॥३४॥ न तदीप्सा हि ॥ ३५ ॥**

---

१ इदं सूत्रं भाष्ये सूत्रत्वेन नोक्तम् । जै० न्या० मा० च नास्ति । वृत्तिग्रन्थे त्वास्ति ।

१ मुख्यापचारे पुनस्तत्प्राप्तौ तस्यैवोपादा-
नाधिकरणम्—१६ ॥

**मुख्याधिगमे मुख्यमागमो हि तद्-
भावात् ॥ २६ ॥**

१ प्रतिनिधिना प्रारब्धे कर्मणि श्रुतद्रव्य-
लाभेऽपि प्रतिनिधिनैव समापनाधि०—१७ ॥

**प्रवृत्तेऽपीति चेत् ॥ २७ ॥**

१ प्रतिनिधौ पशौ वियुक्ते श्रुतद्रव्यलाभेऽपि
प्रतिनिधिनैव समापनाधि०—१८ ॥

**नाऽनर्थकत्वात् ॥ २८ ॥**

१ संस्कारायोग्यस्यापि मुख्यस्यैवोपादाना-
धिकरणम्—१९ ॥

---

१ इदं न भिन्नमधिकरणं किं तु पूर्वसूत्रेण सहैवैकमाधि-
करणं शास्त्रग्रन्थे ॥

द्रव्यसंस्काराविरोधे द्रव्य तदर्थ-त्वात् ॥ ३९ ॥

१ मुख्यस्य कार्यासाधकत्वे प्रतिनिधेरे-वोपादेयताधिकरणम्-२० ॥

अर्थद्रव्याविरोधेऽर्थो द्रव्याभावे त-दुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥ ४० ॥

२ प्रधाननिर्वाहकत्वेऽङ्गनिर्वाहपर्याप्तस्यापि मुख्यस्योपादानाधिकरणम्-२१ ॥

विधिरप्येकदेशे स्यात् ॥ ४१ ॥ अपि वाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्त्यै-तार्थानामविभक्तत्वाद्गुणमात्रामितरत्त-

दर्थत्वात् ॥ ४२ ॥ ( २१ ) ॥२३॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने षष्ठस्याध्यायस्य ( काचित्प्रतिनिधितदभावादिनिरूपणं नाम ) तृतीयः पादः ॥ ॥ ६ ॥ ३ ॥

---

२ अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणम्—१॥

**शेषाद् द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥**

१ स्विष्टकृदर्थावत्तनाशे पुनरवदाननिराकरणाधिकरणम्—२ ॥

**निर्देशाद्वाऽन्यदागमयेत् ॥ २ ॥**

अपि वा शेषभाजां स्याद्विशिष्टकारणात् ॥ ३ ॥

१ ऋत्विजामेव शेषभक्षणाधि०- ३ ॥

निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥ सर्वेषां समवायात्स्यात् ॥५॥ निर्देशस्य गुणार्थत्वम् ॥ ६ ॥ प्रधाने श्रुतिलक्षणम् ॥ ७ ॥ अर्थवादिति चेत् ॥ ८॥ न चोदनाविरोधात् ॥९॥

२ कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणम्- ४ ॥

अर्थसमवायात्प्रायश्चित्तमेकदेशे-

---

१ अर्थवादिति पाठो जै० न्या० मा० ।

पि ॥ १० ॥ न त्वशेषे वैगुण्यात्तदर्थं हि ॥ ११ ॥ स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्न हि तस्य गुणार्थत्वेनानित्यत्वात् ॥ १२ ॥ गुणानां च परार्थत्वाद्वचनाद्व्यपाश्रयः स्यात् ॥ १३ ॥ वचनाद्विकल्प इति चेन्न निमित्तार्थेन संभवात् ॥ १४ ॥ भेदार्थमिति चेन्ना[2]शेषभूतत्वात् ॥ १५ ॥ अनर्थकश्च सर्वनाशे स्यात् ॥ १६ ॥

---

१ इदं भाष्ये सूत्रत्वेन न धृतम् ।

२ नाशेषभूतत्वादित्यंशः थ सूत्रत्वेन वृत्तिमध्ये दृश्यते ।

१ क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानाधिकरणम्-५ ॥ (क्षामेष्टिन्यायः-)

**क्षामे तु सर्वदाहे स्यादेकदेशस्याऽवर्जनीयत्वात् ॥ १७ ॥ दर्शनादेकदेशे स्यात् ॥ १८ ॥ अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥ १९ ॥ तद्धविःशब्दान्नेति चेत्॥२०॥स्यादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात् ॥ २१ ॥**

२ एकहविरार्त्तावपि पञ्चशरावे निर्वापाधिकरणम्- ६ ॥

**यथाश्रुतीति चेत् ॥ २२ ॥ न**

क्षणात्त्वादुपपातो हि कारणम् ॥२३॥

२ होमाभिषवोभयकर्त्तुरेव भक्षणाधि०—७॥

होमाभिषवभक्षणं च तद्वत् ॥२४॥

उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥ २५ ॥

२ पुनराधानं प्रति वह्निद्वयस्य निमित्तताधिकरणम्—८ ॥

पुनराधेयमोदनवत् ॥ २६ ॥ द्रव्योत्पत्तेश्चोभयोः स्यात् ॥ २७ ॥

२ पञ्चशरावनिर्वापस्य कर्मान्तरताधिकरणम्—९ ॥

पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनि-

धिः स्यात् ॥ २८॥ चोदना वा द्रव्यदेवताविधिरवाच्ये हि ॥ २९ ॥

२ पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गताधिकरणम्- १० ॥

स प्रत्यामनेत्स्थानात् ॥ ३० ॥ अङ्गविधिर्वा निमित्तसंयोगात् ॥ ३१ ॥

२ सत्रायाऽऽगूर्याप्रवृत्तस्य विश्वजिदावश्यकताधिकरणम्- ११ ॥

विश्वाजि( त्त्व )दप्रवृत्ते भावः कर्माणि स्यात् ॥ ३२॥ निष्क्रयवादाच्च॥ ३३॥

२ बर्हिर्वत्सयोः कालोपलक्षकताधि ०- १२॥

वत्ससंयोगे व्रतचोदना स्यात् ॥ ३४ ॥ कालो वोत्पन्नसंयोगाद्य-

थोक्तस्य ॥ ३५ ॥ अर्थापरिमाणाच्च ॥३६ ॥ वत्सस्तु श्रुतिसंयोगात् तदंगं स्यात् ॥ ३७ ॥कालस्तु स्यादचोदनात् ॥ ३८॥ अनर्थकश्च कर्मसंयोगे ॥ ३९ ॥ अवचनाच्च स्वशब्दस्य ४०

१ वत्सापाकरणस्य सन्नयदसन्नयदुभयसाधारणताधिकरणम्–१२ ॥

कालश्चेत्सन्नयत्पक्षे तल्लिंगसंयोगात् ॥ ४१ ॥ कालार्थत्वाद्वोभयोः प्रतीयेत ॥ ४२ ॥

---

१ यथोक्तस्येति क्वचित्पुस्तके नास्ति ।

१ उपांशुयागेपि देवतापनयाधि०— २ ॥

उपांशुयागेऽवचनाद्यथाप्रकृति वा ॥ १० ॥ अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥ ११ ॥

१ अनिरुक्तेप्यभ्युदयेष्ट्यधिकरणम्—३ ॥

निरुक्ते स्यात्तत्संयोगात् ॥ १२ ॥ प्रवृत्ते प्रापणान्निमित्तस्य ॥ १३ ॥ लक्षणमात्रमितरत् ॥ १४ ॥ तथा चान्यार्थदर्शनम् ॥ १५ ॥

१ अनिरुक्तेऽभ्युदये वैकृतीभ्यो निर्वापाधिकरणम्—४ ॥

अनिरुक्तेऽभ्युदिते प्राकृतीभ्यो

निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वप-
नयात् ॥ १६ ॥ व्यूर्ध्वभाग्भ्यरुत्वालेख-
नस्तत्कारित्वाद्देवतापनयस्य ॥ १७ ॥

२ किञ्चिन्निरुप्तेऽभ्युदयेऽवशिष्टस्य तूष्णीं
निर्वापाधिकरणम्—८ ॥

विनिरुप्ते न मुष्टीनामपनयस्तद्गुण-
त्वात् ॥ १८ ॥ अप्राकृतेन हि संयो-
गस्तत्स्थानीयत्वात् ॥ १९ ॥ अभा-
वाच्चेतरस्य स्तात् ॥ २० ॥

१ सन्नयदसन्नयदुभयस्यैवाभ्युदये प्राय-
श्चित्ताधिकरणम्—६ ॥

सान्नाय्यसंयोगात्सन्नयतः स्यात्
॥ २१ ॥ औषधिसंयोगाद्वोभयोः २२ ॥

**वैगुण्यान्नेति चेत् ॥ २३ ॥ नातत्संस्कारत्वात् ॥ २४ ॥**

२ सत्राय प्रवृत्तमात्रस्य विश्वजिदाधिकरणम्-७ ॥

**साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात् ॥ २५ ॥ प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ २६ ॥ आदेशार्थेतरा श्रुतिः ॥ २७ ॥**

१ ज्योतिष्टोमे दीक्षापरिमाणानां वैकल्पिकत्वाधिकरणम्-८ ॥

**दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २८ ॥**

१ द्वादशाहे दीक्षापरिमाणनियमाधिक-
रणम्—९ ॥

**द्वादशाहस्तु लिंगात्स्यात् ॥२९॥**

२ गवामयने माघपौर्णमास्याः पुरस्ता-
द्दीक्षाधिकरणम्—१० ॥

**पौर्णमास्यामनियमोऽविशेषात्॥३०॥
आनन्तर्यात्तु चैत्री स्यात् ॥ ३१ ॥
माघी वैकाष्टकाश्रुतेः ॥ ३२ ॥ अन्य
अपीति चेत् ॥ ३३ ॥ न भक्तत्वा-
देषां हि लोके ॥ ३४ ॥ दीक्षापराधे
चानुग्रहात् ॥ ३५ ॥ उत्थाने चानु-**

प्ररोहात् ॥ ३६ ॥ अस्यां च सर्व-लिंगानि ॥ ३७ ॥

१ दीक्षोत्कर्षे तन्नियमानामप्युत्कर्षाधि०–११

दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥ उत्कर्षो वा दीक्षितत्वा-दविशिष्टं हि कारणम् ॥ ३९ ॥

१ दीक्षानुवृत्तौ प्रतिहोमानिराकरणाधिरणम् १२

तत्र प्रतिहोमो न विद्यते यथा पू-र्वेषाम् ॥ ४० ॥ कालप्राधान्याच्च ॥ ४१ ॥

१ उदवसानीयोत्कर्षेऽपि प्रतिहोमानिराक-रणाधिकरणम्–१३ ॥

प्रतिषिद्धाच्चोर्ध्वमवभृथादिष्टेः ॥ ४२ ॥

१ प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणम्—१४ ॥

**प्रतिहोमश्चेत्सायम्प्रभृतीनि हूयेरन् ॥४३॥ प्रातस्तु षोडशिनि ॥ ४४ ॥**

१ भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासांगताधिकरणम्—१५ ॥

**प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥४५ ॥ प्रकरणे वा शब्दहेतुत्वात्॥४६॥ अतद्विकाराच्च ॥४७॥**

( व्यापन्नशब्दार्थनिर्णयाधिकरणम्—१६ ॥

**व्यापन्नस्याप्सु गतौ यद्भोज्यमार्याणां तत्प्रतीयेत ॥ ४८ ॥**

२ अपच्छेदयौगपद्येऽपि प्रायश्चित्ताधि०-१७॥

विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥४९॥ स्याद्वा प्राप्तनिमित्तत्वात्कालमात्रमेकम् ॥ ५० ॥

२ यौगपद्येऽदाक्षिण्यसर्वस्वदाक्षिण्यविकल्पाधिकरणम्-१८ ॥

तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥ ५१ ॥ प्रयोगान्तरे वोभयानुग्रहः स्यात्॥५२॥न चैकसंयोगात्॥५३॥

२ आनुपूर्व्येणापच्छेद उत्तरापच्छेदनिमित्तप्रायश्चित्तानुष्ठानाधिकरणम्-१९ ॥

पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्५४

अंहर्गणे यस्मिन्नपच्छेदस्तदावर्त्तेत कर्म-
पृथक्त्वात् ॥ ५६ ॥ ( २१ )॥ २१॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-
दर्शने षष्ठस्याध्यायस्य ( कालाद्यपराधे
इष्ट्यादिप्रायश्चित्तानिरूपणं नाम )
पञ्चमः पादः ॥ ६॥ ५ ॥

---

त्वादौदुम्बरीवत् ॥ ४ ॥ न तत्प्रधा-
नत्वात् ॥ ५ ॥ औदुम्बर्याः परार्थ-
त्वात्कपालवत् ॥ ६ ॥ अन्येनापी-
ति चेत् ॥ ७ ॥ नैकत्वात्तस्य चान-

---

१ अत्र त्रुटितो ग्रंथः ।

धिकाराच्छन्दस्य चाविभक्तत्वात् ॥ ८ ॥ सन्निपातात्तु निमित्तविघातः स्याद्बृहद्रथन्तरवद्विभक्ताशिष्टत्वाद्वसिष्ठनिर्वर्त्यै ॥ ९ ॥ अपि वा कृत्स्नसंयोगादविभागः प्रतीयेत स्वामित्वेनाभिसंबन्धस्तस्मात्तत्र विघातः स्यात् ॥१०॥ साम्नोः कर्मवदेकदेशेन संयोगो गुणत्वेनाभिसंबन्धस्तस्मात्तत्र विघातः स्यात् ॥ ११ ॥

३ भिन्नकल्पयोरपि राजपुरोहितयोः कुलाययज्ञेऽधिकाराधिकरणम्-२ ॥

वचनात्तु द्विसंयोगस्तस्मादेकस्य

१ घाताद्बृहेति वृत्तिग्रन्थे पाठान्तरम् ।

पाणिवत् ॥ १२ ॥ अर्थाभावात्तु नैवं स्यात् ॥ १३ ॥ अर्थानां च विभक्तत्वान्न तच्छ्रुतेन संबन्धः ॥ १४ ॥ पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत ॥ १५ ॥

१ सत्रे ब्राह्मणमात्रस्याधिकाराधि०—३ ॥

सत्राणि सर्ववर्णानामविशेषात् ॥ १६ ॥ लिङ्गदर्शनाच्च ॥ १७ ॥ ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १८ ॥ वचनादिति चेत् ॥ १९ ॥ न स्वामित्वं हि विधीयते ॥ २० ॥

गार्हपते वा स्यान्नामाविप्रतिषेधात् ॥ २१ ॥ न वा कल्पविरोधात् ॥ २२ ॥ स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २३ ॥

२ विश्वामित्रतत्समानकल्पानामेवाधिकाराधिकरणम्- ४ ॥

वासिष्ठानां वा ब्रह्मत्वनियमात् ॥ २४ ॥ सर्वेषां वा प्रतिप्रसवात् ॥ २५ ॥ वैश्वामित्रस्य हौत्रानियमाद्भृगुशुनकवसिष्ठानामनधिकारः ॥ २६ ॥

१ सत्रे आहिताग्नेरेवाधिकाराधि०- ५ ॥

विहारस्य प्रभुत्वादनग्नीनामपि

स्यात् ॥ २७ ॥ सारस्वते च दर्शनात् ॥ २८ ॥ प्रायश्चित्तविधानाच्च ॥२९॥ साग्नीनां वेष्टिपूर्वत्वात् ॥३०॥ स्वार्थेन च प्रयुक्तत्वात् ॥ ३१ ॥ सन्निवापं च दर्शयति ॥ ३२ ॥

१ जुह्वादीनां साधारण्याधिकरणम्— ६ ॥

जुह्वादीनामप्रयुक्तत्वात्संदेहे यथाकामी प्रतीयते ॥ ३३ ॥ अपि वाऽन्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वात् ॥ ३४ ॥ प्रायश्चित्तमापदि स्यात् ॥ ३५ ॥

२ विकृतसप्तदशसामिधेनीषु वर्णत्रयाधिकाराधिकरणम्-७ ॥

**पुरुषकल्पेन विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकस्मिन्नधिकारः स्यात् ॥३६॥ लिङ्गाच्चेज्याविशेषवत् ॥ ३७ ॥ न वा संयोगपृथक्त्वाद् गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥ इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत ॥ ३९ ॥ ( ७ ) ॥ १२ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमी मांसादर्शने षष्ठस्याध्यायस्य ( सत्राधिकारिणो विप्रा एव तुल्यकल्पाश्चे त्यादिनिरूपणं नाम ) षष्ठ पादः ॥ ६ ॥ ६ ॥

१ विश्वजिति पित्रादीनामदेयत्वाधि०—१॥

**स्वदाने सर्वमविशेषात् ॥ १ ॥**

**यस्य वा प्रभुः स्यादितरस्याऽशक्यत्वात् ॥ २ ॥**

१ विश्वजिति भूमेरदेयत्वाधि०—२ ॥

**न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ ३ ॥**

१ विश्वजित्यश्वादीनामदेयताधि०—३ ॥

**अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥**

१ विश्वजित्यविद्यमानसर्वस्वदाननिराकर-
णाधिकरणम्-४ ॥

नित्यत्वाच्चानित्यैर्नास्ति संबन्धः॥५॥

१ विश्वजिति धर्मार्थसेवकशूद्रस्यादेयता-
धिकरणम्-५ ॥

शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥

१ विश्वजिति दक्षिणाकाले विद्यमानानामे-
व सर्वस्वानां देयताधिकरणम्-६ ॥

दक्षिणाकाले यत्स्वं तत्प्रतीयेत
तद्दानसंयोगात् ॥ ७ ॥

२ विश्वजिति दक्षिणादानोत्तराङ्गानामनुष्ठानाधिकरणम्—७ ॥

अशेषत्वात्तदन्तः स्यात्कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥ अपि वा शेषकर्म स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥ तथा चान्यार्थदर्शनम् ॥ १० ॥ अशेषं तु समञ्जसमादाने शेषकर्म स्यात् ॥ ११ ॥ नादानस्यानित्यत्वात् ॥ १२ ॥ दीक्षासु विनिर्देशादक्रत्वर्थेन संयोगस्तस्माद्विरोधः स्यात् ॥ १३ ॥

१ साऽऽदानेनेति भाष्ये पाठः।

२ अहर्गणस्थेपि विश्वजिति सर्वस्वदानाधिकरणम्-८ ॥

**अहर्गणे च तद्धर्मः स्यात्सर्वेषामविशेषात् ॥ १४ ॥ द्वादशशतं वा प्रकृतिवत् ॥१५॥ अतद्गुणत्वात्तु नैवं स्यात् ॥१६॥ लिङ्गदर्शनाच्च॥१७॥**

१ विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम्-९ ॥

**विकारःसन्नुभयतोऽविशेषात् १८॥ अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ अनुग्रहाच्च पादवत् ॥ २० ॥**

२ अपरिमितशब्दस्य संख्यान्तरत्वाधि १० ॥

अपरिमिते शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ २१ ॥ कल्पान्तरं वा तुल्यवत्प्रसङ्ख्यानात् ॥ २२ ॥

१ अपरिमितशब्देन सहस्राधिकग्रहणाधिकरणम्— ११ ॥

अनियमोऽविशेषात् ॥ २३ ॥ अधिकं वा स्याद्बह्वर्थत्वादितरेः सन्निधानात् ॥ २४ ॥ अर्थवादश्च तदर्थवत् ॥ २५ ॥

१ इति ह स्मेत्यादिपरकृतिपुराकल्पानामर्थवादताधिकरणम्— १२ ॥

परकृतिपुराकल्पं च मनुष्यधर्मः

---

१ अत्र सूत्रे शिष्टस्येति पदं नास्ति वृत्तिग्रन्थे ।

स्यादर्थाय ह्यनुकीर्त्तनम् ॥ २६ ॥ तद्युक्ते च प्रतिषेधात् ॥ २७ ॥ निर्देशाद्वा तद्धर्मःस्यात्पञ्चावत्तवत्॥२८॥ विधौ तु वेदसंयोगादुपदेशः स्यात् ॥ २९ ॥ अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादः स्यात्॥३०॥

८ सहस्रसंवत्सरशब्दस्य सहस्रदिनपरताधिकरणम्- १३ ॥

सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु ॥ ३१ ॥ उपचारोन्यार्थदर्शनम् ॥ ३२ ॥ अपि वा तदधिकारा-

१ वृत्तिग्रन्थे इदं सूत्रमधिकम् ।

न्मनुष्यधर्मः स्यात् ॥ ३३ ॥ नासा-
मर्थ्यात् ॥ ३४ ॥ सम्बन्धादर्श-
नात् ॥ ३५ ॥ सकुल्यः स्यादिति
कार्ष्णाजिनिरेकस्मिन्नसंभवात् ॥ ३६ ॥
अपि वाकृत्स्नसंयोगादेकस्यैव प्रयोगः
स्यात् ॥ ३७ ॥ विप्रतिषेधात्तु गुण्यन्य-
तरः स्यादिति लाबुकायनः ॥ ३८ ॥
संवत्सरो वा विचालित्वात् ॥ ३९ ॥
सा प्रकृतिः स्यादधिकारात् ॥ ४० ॥

---

१ स प्रकृतिरिति वृत्तिग्रन्थे पाठान्तरम् ।

अहानि वाऽभिसंख्यात्वात् ॥ ४१ ॥ (१३) ॥ २३ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने षष्ठस्याध्यायस्य ( देयाऽदेययोर्निरूपणं नाम ) सप्तमः पादः ॥ ६ ॥ ७ ॥

---

२ चतुर्होतृहोमेऽनाहिताग्नेरेवाधिकराधिकरणम्—१ ॥

इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषुदर्शयति ॥ २ ॥ उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥ स सर्वेषामविशेषात् ॥ ४ ॥ अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥

जपो वाऽनग्निसंयोगात् ॥ ६ ॥ इष्टित्वेन संस्तुते होमःस्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥ उभयोः पितृयज्ञवत् ॥ ८ ॥ निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात् ९॥ पितृयज्ञे संयुक्तस्य पुनर्वचनम्॥१०॥

२ अनाहिताग्निषूपयनहोमाधिकरणम् ०—२

उपनयन्नादधीत होमसंयोगात् ॥११॥ स्थपतिवल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥ आधानं च भार्यासंयुक्तम् ॥ १३ ॥ अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः॥ १४॥ अकर्म च दाराक्रियाधानोत्तरः

काले ॥१५॥ श्राद्धवदिति चेत ॥१६॥ न श्रुतिविप्रतिषेधात् ॥ १७ ॥ अर्थादन्यदेवेति चेत् ॥ १८ ॥ सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १९ ॥ सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥ २० ॥ पितृयज्ञे तु दर्शनात्[३] प्रागाधानात्प्रतीयेत ॥ २१ ॥

१ अनाहिताग्नौ स्थपतीष्ट्यधिकरणम्-३॥

स्थपतीष्टिःप्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ २२॥ अपि

---

१ इदं सूत्रमाधिकं वृत्तिग्रन्थे ।

२ स्वादपुत्रोति वृत्तिग्रन्थे पाठान्तरम् ।

३ दर्शनात्प्रतीति वृत्तिग्रन्थे पाठान्तरम् ।

वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २३ ॥

१ अनाहिताग्न्यवकीर्णिपश्वनुष्ठानाधिकरणम्— ४ ॥

अवकीर्णपशुश्च[1] तद्वदाधानस्याप्राप्तकालत्वात् ॥ २४ ॥

१ दैवकर्मणामुदगयनादिकालताधि०—५॥

उदगयनपूर्वपक्षाहः पुण्याहेषु दैवानि स्मृतिरूपाव्यार्थदर्शनात् २५॥

अहनि च कर्मसाकल्यम् ॥ २६ ॥

१० पित्र्यकर्मणोऽपरक्षादिकालताधि०—६ ॥

इतरेषु तु पित्र्याणि ॥ २७ ॥

---

१ कीर्णी इति पाठान्तरं वृत्तिग्रन्थे ।

२ इदं सूत्रं भिन्नाधिकरणभूतमेकमधिकं वृत्तिग्रन्थे शाबरभाष्ये वार्तिके च ।

१ ज्योतिष्टोमांगयाच्ञाक्रययोर्नित्य-
ताधिकरणम्-६ ॥

**याच्ञाक्रयणमविद्यमाने लोकवत् ॥२८॥ नियतं वार्थवत्त्वात्स्यात्२९॥**

१ ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्य
ताधिकरणम्-७॥

**तथा भक्षप्रैषाच्छादनसंज्ञप्तहोम-द्वेषम् ॥ ३० ॥**

१ अपररात्रे व्रतस्यानित्यताधिकरणम्-८॥

**अनर्थकं त्वनित्यं स्यात् ॥ ३१॥**

छागस्यैवाग्निषोमीयपशुताधिकरणम्—९ ॥

पशुचोदनायामनियमोऽविशेषात् ॥३२॥ छागो वा मन्त्रवर्णात् ॥३३॥ न चोदनाविरोधात् ॥ ३४ ॥ आर्षेयवदिति चेत् ॥ ३५ ॥ न तत्र ह्यचोदितत्वात् ॥ ३६ ॥ नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात् ॥ ३७ ॥ अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३८ ॥ रूपाल्लिंगाच्च[1] ॥ ३९ ॥ छागेन कर्माख्या रूपलिंगाभ्याम् ॥ ४० ॥ रूपान्यत्वान्न जातिशब्दः

१ इदं सूत्रं वृत्तिग्रन्थे नास्ति ।

स्यात् ॥ ४१ ॥ विकारो नौत्पत्तिक त्वात् ॥ ४२ ॥ स नैमित्तिकः पशो- र्गुणस्याचोदितत्वात् ॥४३ ॥ जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ४४(९)११

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-
सादर्शने ( उपनयनहोमस्थपतीष्ट्यादौ
लौकिकाग्नौ होम इत्यादिविचारो
नाम ) षष्ठस्याध्यायस्य[1]-
ष्टमः पादः ॥६ ॥ ८ ॥
समाप्तश्च षष्ठोऽध्यायः ॥ ६ ॥
समाप्तं पूर्वषट्कम् ॥

---

१ विकार इति चेदिति चेत्पदं संयोज्यतदन्तं पृथक् सूत्रं वृत्तिग्रन्थे ।

# अथ सप्तमोऽध्यायः ।



प्रत्यक्षवचनेनानुमितवचनेन च
सामान्यतोऽतिदेशो निरूप्यते ।

२ प्रयाजादिधर्माणामपूर्वप्रयुक्तताधि०—१॥

श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात्॥ १ ॥उत्पत्त्यर्थाविभागाद्वासत्त्ववदैकधर्म्यंस्यात् ॥ २॥चोदनाशेषभावाद्वा तद्धा तद्भेदाव्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ३ ॥ सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रती-

१ मुख्यभेदे इति पाठान्तरं वृत्तिग्रन्थे ।

येत ॥ ४ ॥ अविभागात्तु नैवं स्यात् ॥ ५ ॥ व्यर्थत्वं च विप्रतिसिद्धम् ॥ ६ ॥ उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्ततश्च कर्मभेदः स्यात् ॥ ७ ॥ यदि वाऽप्यभिधानवत्सामान्यात्सवधर्मः स्यात् ॥ ८ ॥ अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य कर्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥ स्मृतिरिति चेत् १०

---

१ सर्वसिद्धिः स्यादिति वृत्तिग्रन्थे पाठान्तरम् ।
२ अस्मिसूत्रस्थं नञ्पदमत्रैव सूत्रान्ते वृत्तिग्रन्थे पठ्यते ।

न पूर्ववत्त्वात् ॥ ११ ॥ अर्थस्य शब्दभाव्यत्वात्प्रकरण निम्बन्धनाच्छब्दादेवान्यत्र भावः स्यात् ॥ १२ ॥

३ इषौ श्येनीयविशेषधर्मातिदेशाधि०— २ ॥

समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ १३ ॥ श्येनस्येति चेत् ॥ १४ ॥ नासन्निधानात् ॥ १५ ॥ अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्योतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् १६

२ पञ्चहविःषु सार्थवादविध्यतिदेशाधि०-३

पञ्चसञ्चरेष्वर्थवादातिदेशः सन्नि-

---

१ पूर्वस्मादिमस्मै सूत्रमिदं पक्वते वृत्तिमन्थे ।

धानात् ॥ १७ ॥ सर्वस्य वैकंश[1]-
ब्दात् ॥१८॥ लिंगदर्शनाच्च॥ १९॥
विहिताम्नानान्नेति चेत् ॥ २० ॥ ने-
तरार्थत्वात् ॥ २१ ॥

१ एककपालैन्द्राग्नयोः सार्थवादविध्यति-
देशाधिकरणम् ०—४

एककपालैन्द्राग्नौ च तद्वत् ॥२२॥

२ साकमेधे वारुणप्रघासिकैककपालाति-
देशाधिकरणम्—५ ॥

एककपालानां वैश्वदेविकः प्रकृ-
तिराग्रयणे सर्वहोमापरिवृत्तिदर्शना-

---

१ स्य वैकेति वृत्तिग्रन्थे पाठान्तरम् ।

द्वभृथे च सकृद् व्यवदानस्य वच-
नात् ॥ २३ ॥ ( ५ ) ॥ १० ॥

॥ इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-
दर्शने (" समानमितरच्छ्येनेन " इत्यादि-
प्रत्यक्षवचनातिदेशो नाम ) सप्तमस्या-
ध्यायस्य प्रथमःपादः॥ ७ ॥१॥

२ रथन्तरादिशब्दानां गानविशेषार्थता-
धिकरणम्—१ ॥

साम्नोऽभिधानशब्देन प्रवृत्तिः
स्याद्यथाशिष्टम् ॥ १ ॥ शब्दैस्त्वर्थ-
विधित्वादर्थान्तरेऽप्रवृत्तिः स्यात्पृथ-
ग्भावात्क्रियाया ह्यभिसंबन्धः ॥ २ ॥

स्वार्थं वा स्यात्प्रयोजनं क्रियायास्त-
दंगभावेनोपदिश्येरन् ॥ ३ ॥ शब्द-
मात्रमिति चेत् ॥ ४ ॥ नौत्पत्तिक-
त्वात् ॥ ५ ॥ शास्त्रं चैवमनर्थकं
स्यात् ॥ ६ ॥ स्वरस्येति चेत् ॥७॥
नार्थाभावाच्छ्रुतेरसम्बन्धः ॥ ८ ॥
स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभ-
क्तत्वात् ॥९॥ लिङ्गदर्शनाच्च ॥१०॥
अश्रुतेस्तु विकारस्योत्तरासु यथाश्रु-
ति ॥ ११ ॥ शब्दानां चासामञ्जस्य-
म् ॥ १२ ॥ अपि तु कर्मशब्दः स्या-
द्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो

ह्यविशिष्टोऽन्यैः ॥ १३ ॥ अद्रव्यं चापि दृश्यते ॥ १४ ॥ तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् १५॥ तस्मिन्त्संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥ १६ ॥ योनिशस्याश्च तुल्यवादितराभिर्विधीयन्ते ॥ १७ ॥ अयोनौ चापि दृश्यतेऽतथायोनि ॥१८॥ ऐकार्थ्यं[1] नास्ति वैरूप्यमिति चेत् ॥ १९ ॥ स्यादर्थान्तरेष्वनिष्पत्तेर्यथा[2] लोके ॥ २० ॥ शब्दा-

(१) एकार्थे इति वृत्तिग्रन्थे पाठान्तरम् ।
(२) यथा पाके इति वृत्तिग्रन्थे पाठान्तरम्

**नांच समञ्जस्यम् २१॥ (१) ॥ २ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने ( अपूर्वोक्तातिदेशशेषविचारो नाम ) सप्तमस्याध्यायस्य द्वितीयः पादः ॥७॥२ ॥

२ अग्निहोत्रादिनाम्ना धर्मातिदेशाधि०—१॥

**उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥ अपूर्वे वापि भागित्वात् ॥ २ ॥ नाम्नस्त्वौत्पत्तिकत्वात्॥ ३ ॥प्रत्यक्षाद्गुणसंयोगात्क्रियाभिधानं स्यात्तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥**

२प्रापणायनाम्ना धर्मानतिदेशाधि०—२ ॥

अपि वा सर्वत्र कर्माणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥

३ सर्वपृष्ठशब्देन षट्पृष्ठानामतिदेशाधिकरणम्—३ ॥

विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति चपृष्ठशब्दः ॥ ६ ॥ षडहाद्वा तत्र हि चोदनाः ॥ ७ ॥ लिंगाच्च ॥ ८ ॥ उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ९ ॥ द्वयोर्विधिरिति चेत् ॥ १० ॥ न व्यर्थत्वात्सर्वशब्दस्य ॥ ११ ॥

---

( १ ) लिङ्गदर्शनाच्चेति पाठान्तरं वृत्तिग्रन्थे ।

३ अवभृथनाम्ना सौमिकधर्मातिदेशाधि० ७—४ ॥

तथावभृथः सोमात् ॥ १२ ॥ प्रकृतेरिति चेत् ॥ १३ ॥ न भक्तित्वात् ॥ १४ ॥ लिंगदर्शनाच्च ॥ १५ ॥

२ वारुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम्—५ ॥

द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥

२ वैष्णवशब्दादातिथ्ये धर्मानतिदेशाधिकरणम्—६ ॥

गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ १७ ॥

१ निर्मन्थ्यादिशब्दैर्धर्मानतिदेशाधि०—७ ॥

**निर्मन्थ्यादिषु चैवम् ॥ १८ ॥**

१ प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणम्—८ ॥

**प्रणयनन्तु सौमिकमवाच्यं हीतरत् ॥ १९ ॥ उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥ प्राकृतं वाऽनामत्वात् ॥ २१ ॥ परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २२ ॥**

१ मध्यमयोर्द्वयोरेव प्रणयनाधि०—९ ॥

**प्रथमोत्तमयोः प्रणयनमुत्तरवेदि-**

(१) एकोनविंशसूत्रमारभ्य पञ्चविंशतितमसूत्रान्तमेकमधिकरणं वार्तिकमते।

प्रतिषेधात् ॥ २३ ॥ मध्यमयोर्वा ग-
त्यर्थवादात् ॥ २४ ॥ औत्तरवेदिको-
ऽनारभ्यवादप्रतिषेधः ॥ २५ ॥

१ स्वरसामादिशब्देन धर्मातिदेशाधि०—१० ॥

स्वरसामैककपालामिक्षं च लिङ्ग-
दर्शनात् ॥ २६ ॥ चोदनासामान्या-
द्वा ॥ २७ ॥

१ वासआदिशब्दानामाकृतिनिमित्तता-
धिकरणम्—११ ॥

कर्मजे कर्म यूपवत् ॥ २८ ॥
रूपं वाऽशेषभूतत्वात् ॥ २९ ॥

(१) इदं सूत्रं वृत्तिग्रन्थे नास्ति

१ गर्गत्रिरात्रे लौकिकेऽग्नावुपानिधानाधिकरणम्--१२ ॥

विशये लौकिकः स्यात्सर्वार्थत्वात् ॥ ३० ॥ न वैदिकमर्थनिर्देशात् ॥ ३१ ॥ तथोत्पत्तिरितरेषां समत्वात् ॥ ३२ ॥

१ यूपशब्दस्य संस्कारप्रयोजकताधि०--१३ ॥

संस्कृतं स्यात्तच्छब्दत्वात् ॥ ३३ ॥ भक्त्या वाऽयज्ञशेषत्वाद्गुणानामभिधानत्वात् ॥ ३४ ॥

१ पृष्ठशब्दस्य ऋग्वेदवाचित्वाधि० - १४ ॥

---

१ धानादिति वृत्तिग्रन्थे पाठान्तरम् ।

**कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ ३८ ॥ अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दः स्यात् ॥ ३९ ॥ ( १४ ) ॥ २४ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने ( अग्निहोत्रनाम्नाऽतिदेशो नाम ) सप्तमस्याध्यायस्य तृतीयः पादः ॥७॥३॥

---

१ सौर्ये चराविति कर्तव्यतावत्त्वाधि०-१॥

**इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥**

१ मौर्ये चरौ वैदिकैतिकर्तव्यताधि०—२॥

स लौकिकः स्याद्दृष्टप्रवृत्तित्वात् ॥ २ ॥ वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥ लिंगेन वा नियम्येत लिंगस्य तद्गुणत्वात् ॥ ४ ॥ अपि वाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥ मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥ भागित्वात्तु नियम्येत गुणानामभिधानत्वात्सम्बन्धादभिधानवद्यथा धेनुः किशोरेण ॥ ७ ॥ उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः

---

१ लिङ्गस्येति पदं वृत्तिग्रन्थे नास्ति ।

स्यात् ॥ ८ ॥ उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥ विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत[1] तथा हि लिंगदर्शनम् ॥ १० ॥ लिंगहेतुत्वा[2]दलिंगे लौकिकं स्यात् ॥ ११ ॥ लिंगस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥

१ गवामयन ऐकाहिकेतिकर्तव्यतानुष्ठानाधिकरणम्- ३ ॥

द्वादशाहिकमहर्गणे तत्प्रकृतित्वा-

१ प्रवर्तते इति वृत्तिग्रन्थे पाठान्तरम् ।

२ लिंगस्य हेत्विति वृत्तिग्रन्थे पाठान्तरम् ।

द्वैकाहिकमधिकागमात्तदाख्यं स्याद्-
काहवत् ॥ १३ ॥ लिंगाच्च
॥ १४ ॥ न वा कत्वभिधानाद्द्वधिका-
नामशब्दत्वम् ॥ १५ ॥ लिंगं सङ्घा-
तधर्मः स्यात्तदर्थापत्तेर्द्रव्यवत् ॥ १६ ॥
न वार्थधर्मत्वात्सङ्घातस्य गुणत्वात्
॥ १७ ॥ अर्थापत्तेर्द्रव्येषु धर्मलाभः
स्यात् ॥ १८ ॥ प्रवृत्त्या नियतस्य
लिंगदर्शनम् ॥ १९ ॥ विहारदर्शनं

---

१ धर्मः स्यात्स्येति वृत्तिग्रन्थे पाठान्तरम् ।

२ दर्शनं चेति चकाराधिको वृत्तिग्रन्थे ।

**विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् ॥ २० ॥ ( २ ) ॥ २ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने ( निर्वापौषधद्रव्यातिदेशो नाम )
सप्तमस्याध्यायस्य चतुर्थः
पादः ॥ ७ ॥ ४ ॥
समाप्तः सप्तमोऽध्यायः ॥ ७ ॥



## अथाष्टमोऽध्यायः ।

"तत्र सौर्यं चरुं निर्वपेद्" इत्यत्र निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमिति लिङ्गेनाग्नेयपुरोडाशेतिकर्तव्यतैव नान्यस्येत्येवमादिर्विशेषतोऽतिदेशो निरूप्यते—

१ विशेषचिन्ताधिकरणम् – १ ॥

**अथ विशेषलक्षणम् ॥ १ ॥**

१ विशेषकर्मणो धर्मातिदेशाधि० – २ ॥

**यस्य लिंगमर्थसंयोगादभिधानवत् ॥ २ ॥**

३ सोम ऐष्टिकधर्मानतिदेशाधिकरणम् –

३ वर्णकद्वयम् – २ ॥

**प्रवृत्तित्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥ ३ ॥ लिंगदर्शनाच्च ॥ ४ ॥ कृत्स्नविधानाद्वाऽपूर्वत्वम् ॥ ५ ॥ स्रुगभिघारणाभावस्य च नित्यानुवा**

---

१ वृत्तत्वेति वृत्तिमन्ये पाठान्तरम् ।

दात् ॥ ६ ॥ विधिरिति चेत् ॥ ७ ॥ न वाक्यशेषत्वात् ॥ ७ ॥ शङ्कते चानुपोषणात् ॥ ९ ॥ दर्शनमैष्टिकानां स्यात् ॥ १० ॥

१ ऐन्द्राग्नादावैष्टिकधर्मातिदेशाधि०- ४ ॥

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥

१ अग्नीषोमीयपशौ दार्शपूर्णमासिकधर्मातिदेशाधिकरणम्- ५ ॥

पशौ च लिंगदर्शनात् ॥ १२ ॥

१ सवनीयपशावग्नीषोमीयधर्मातिदेशाधिकरणम्- ६ ॥

दैक्षस्य चेतरेषु ॥ १३ ॥

१ ऐकादशिनपशौ समानधर्मातिदेशाधिकरणम्— ७ ॥

**ऐकादशिनेषु सौत्यस्य द्वैरशान्यस्य दर्शनात् ॥ १४ ॥**

१ पशुगणेष्वैकादशिनधर्मातिदेशाधि०—८

**तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥**

१ अव्यक्तपशौ सौमिकधर्मातिदेशाधि०—९

**अव्यक्तासु तु सोमस्य ॥ १६ ॥**

१ अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम्— १० ॥

**गणेषु द्वादशस्य ॥ १७ ॥**

---

१ शान्यदर्वीति पाठान्तरं वृत्तिग्रन्थे ।

१ संवत्सरसत्त्रेषु गवामयनिकधर्मातिदेशाधिकरणम्–११ ॥

**गव्यस्य च[1] तदादिषु ॥ १८ ॥**

१ निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम्–१२ ॥

**निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥**

१ फलादीनामनतिदेशाधिकरणम्–१३ ॥

**कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तदन्धनत्वात् ॥ ॥ २० ॥ प्रवृत्तौ[2] चापि ताद-**

१ स्य चैतदेति पाठान्तरं वृत्तिग्रन्थे ।

२ त्तावपि इति पाठान्तरं वृत्तिग्रन्थे ।

थ्यात् ॥ २१॥ अश्रुतित्वाच्च ॥२२॥

१ गुणकामानां गोदोहनादीनामातिदेशाधिकरणम्— १४ ॥

गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ २३ ॥ निवृत्तिर्वा कर्मभेदात् ॥२४॥ अपि वाऽतद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥

१ सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम्—१५ ॥

एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

१ सौर्यचरावाग्नेयधर्मातिदेशाधि०—१६ ॥

लिङ्गसाधारण्याद्विकल्पः स्यात् २७

ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥ अश्रुतित्वान्नेति चेत् ॥ २९ ॥ स्याल्लिंगभावात् ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥

१ हविर्देवतयोः सन्निपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम्— १७ ॥

विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपास्यत्वात्[2] ॥ ३२ ॥ तेन च कर्मसंयोगात् ॥ ३३ ॥ गुणत्वेन देवताश्रुतिः ॥ ३४ ॥

---

१ अ तर्थेति पाठान्तरं वृत्तिग्रन्थे ।
२ पाठ्यत्वेति पाठान्तरं वृत्तिग्रन्थे ।

१ शतकृष्णलाख्यहिरण्ये औषधधर्मातिदे-
शाधिकरणम्- १८ ॥

हिरण्यमाज्यधर्मस्तेजस्त्वात्॥ ३५॥
धर्मानुग्रहाच्च॥ ३६॥ औषधं वा विश-
दत्वात् ॥ ३७॥ चरुशब्दाच्च॥ ३८॥
तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥

१ मधूदक उपांशुयाजीयाऽऽज्यधर्मातिदे-
शाधिकरणम्- १९ ॥

मधूदके द्रव्यसामान्यात्पयोवि-
कारः स्यात् ॥ ४० ॥ आज्यं वा
वर्णसामान्यात् ॥ ४१ ॥ धर्मानुग्र-
हाच्च ॥ ४२ ॥ पूर्वस्य चाविशिष्ट-

१ चकाररहित पाठो वृत्तिग्रन्थे ।

त्वात् ॥ ४३ ॥ ( १९ ) ॥ २१ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने ( स्पष्टलिङ्गेनातिदेशविशेषनिरूपणं नाम) अष्टमस्याध्यायस्य प्रथमः पादः ॥८॥

---

१ ऐष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम्—१॥

**वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ अनुवषट्काराच्च ॥ २ ॥ समुपहूय भक्षणाच्च ॥३ ॥ क्रयणश्रपणपुरोरुगुपयामग्रहणासादनवासोपनहनञ्च तद्वत् ॥४॥ हविषा वा नियम्येत तद्विकारत्वात्५॥**

प्रशंसा सोमशब्दः ॥ ६ ॥ वचनानीतराणि ॥७॥ व्यपदेशश्च तद्वत् ॥८॥ पशुपुरोडाशस्य च लिंगदर्शनम् ॥९॥

१ पशौ सान्नाय्यधर्मातिदेशाधि०— २ ॥

पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ १० ॥ प्रोक्षणाच्च ॥ ११ ॥ पर्यग्निकरणाच्च ॥१२॥ सान्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ तस्य च पात्रदर्शनात् ॥ १४ ॥

१ पशौ पयोधर्मातिदेशाधिकरणम्—३ ॥

दध्नः स्यान्मूर्त्तिसामान्यात्॥१५॥ पयो वा कालसामान्यात् ॥ १६ ॥

पश्वानन्तर्यात् ॥ १७ ॥ द्रवत्वं चाविशिष्टम् ॥ १८ ॥

आमिक्षायां पयोधर्मातिदेशाधि० ७—४ ॥

आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥ एकं वा चोदनैकत्वात् ॥ २० ॥ दधिसङ्घातसामान्यात् ॥ २१ ॥ पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥ २२ ॥ धर्म्मानुग्रहाच्च ॥ २३ ॥ सद्योभावं[2] च दर्शयति ॥ २४ ॥

---

१ र्थांक्तेति पाठान्तरं वृत्तिग्रन्थे ।

२ इदं सूत्रमाधिकं वृत्तिग्रन्थे पठ्यते ।

१ द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम्—९ ॥

सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २५ ॥ अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात्प्रकृत्या तुल्यशब्दत्वात् ॥ २६ ॥ द्विरात्रादीनामेकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २७ ॥ त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायि चोदनात् ॥ २८ ॥ लिङ्गाच्च ॥ २९ ॥

---

१ इदं सूत्रं वृत्तिग्रन्थे नास्ति ।

२ पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधि०—६॥

अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात्[1] ॥ २० ॥ अहीनवचनाच्च ॥ २१ ॥ सत्रे[2] वोपायिचोदनात् ॥ २२ ॥ सत्रलिङ्गं च दर्शयति ॥ २३ ॥ ( ६) ॥ ७ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने ( अस्पष्टलिङ्गैरातिदेशो नाम ) अष्टमस्याध्यायस्य द्वितीयः पादः ॥८॥ २ ॥

---

१ स्वदर्शनादिति पाठान्तरं वृत्तिग्रन्थे ।

२ सत्रे वोपेयीति पाठान्तरं वृत्तिग्रन्थे ।

२ शुचिदेवक आग्नेयस्य आग्नावैष्णवे चाग्नीषोमीयस्य धर्मस्यातिदेशाधिकरणम्—१ ॥

**हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥**

१ जनकसप्तरात्रे त्रिवृत्स्वहस्सु द्वादशाहधर्मातिदेशाधिकरणम्—२ ॥

**गणचोदनायां यस्य लिंगं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ नानाहानिवा सङ्घातत्वात्प्रवृत्तिर्लिंगे न चोदनात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥**

१ षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधि०—३॥

कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥ तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ७ ॥ तस्मात्षडहाभ्यासः ॥ ८ ॥

१ संस्थाशब्देषु द्वादशाहिकधर्मातिदेशाधिकरणम्—४ ॥

संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ९ ॥ आधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥ १० ॥

---

१ इदं सूत्रमाधिकं वृत्तिग्रन्थे ।

१ शतोक्थ्यादौ ज्योतिष्टोमात्स्तोत्रोपचया-
धिकरणम्—८ ॥

**गणादुपचयस्तत्प्रकृतित्वात्॥११॥**
**एकाहाद्वा तेषां समत्वात्स्यात्॥१२॥**

१ गायत्रीषूत्पत्तिगायत्रीणामतिदेशा-
धिकरणम्— ६ ॥

**गायत्रीषु प्राकृतीनामवच्छेदःप्रवृ-
त्त्यधिकारात्सङ्ख्यात्वादग्निष्टोमवद-
व्यतिरेकात्तदाख्यत्वम् ॥ १३ ॥तान्नि
त्यंवञ्च पृथक्सतीषु तद्वचनम् ॥१४॥
न विंशतौ दशेति चेत् ॥ १५ ॥**

---

१ तन्नीत्यत्र तादिति पदराहितः पाठो वृत्तिग्रन्थे ।

ऐकसङ्ख्यमेव स्यात् ॥ १६ ॥ गुणाद्वा[1] द्रव्यशब्दः स्यादसर्वविषयत्वात् १७ ॥ गोत्ववच्च समन्वयः ॥ १८ ॥ सङ्ख्यायाश्च शब्दवत्त्वात् ॥ १९ ॥ इतरस्याश्रुतित्वाच्च ॥ २० ॥ द्रव्यान्तरेऽनिवेशादुक्थ्यलोपे[1]वा विशिष्टं स्यात् २१ अशास्त्रलक्षणत्वाच्च ॥ २२ ॥ उत्पत्तिनामधेयत्वाद्भक्त्या पृथक्सतीषु स्यात्[2] ॥ २३ ॥ वचनमिति चेत् ॥ २४ ॥

---

१ लोपे वीति वृत्तिग्रन्थे पाठान्तरम् ।

२ स्यादिति चराहित:पाठो वृत्तिग्रन्थे ।

२ स्यादिति पदराहितं पाठांतरं वृत्तिग्रन्थे ।

यावदुक्तम् ॥ २५ ॥ अपूर्वे च विकल्पः स्याद्यदि सङ्ख्याविधानम् ॥ २६ ॥ ऋग्गुणत्वान्नेति चेत् ॥ २७ ॥ तथा पूर्ववति स्यात् ॥ २८ ॥ गुणावेशश्च सर्वत्र ॥ २९ ॥ निष्पन्नग्रहणान्नेति[1] चेत् ॥ ३० ॥ तथेहापि स्यात् ॥ ३१ ॥ यदि वाऽविशेषे नियमः प्रकृत्युपबन्धाँ[2]च्छरेष्वपि प्रसिद्धः स्यात् ॥ ३२ ॥ दृष्टः प्रयोग इति चेत् ॥ ३३ ॥ तथा शरेष्वपि ॥ ३४ ॥ भक्त्येति चेत् ॥ ३५ ॥

१ ग्रहान्नेतीति पाठान्तरं वृत्तिग्रन्थे ।
२ बन्धनाच्छरेष्वपीति वृत्तिग्रन्थे पाठान्तरम् ।

तथेरस्मिन् ॥ ३६ ॥ अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात्॥ ३७ ॥ ( ६ ) ॥ ७ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने ( प्रबललिंगेनातिदेशो नाम ) अष्टमस्याध्यायस्य तृतीयः पादः ॥ ८ ॥ ३ ॥

१ दार्विहोमशब्दस्य कर्मनामधेयताधि०-१

दार्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

१ दार्विहोमशब्दस्य लौकिकवैदिकोभयकर्मनामधेयताधिकरणम्-२ ॥

स लौकिकानां स्यात्कर्तुस्तदाख्य

---

१ एतदधिकरणशेषोऽत्र पञ्चसूत्रांविर्नवमसूत्रान्तो ज्ञेयः ॥

त्यात् ॥ २ ॥ सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥

१ दर्विहोमशब्दस्य होमनामधेयताधि०—३॥

जुहोतिचोदनानां वा तत्संयोगात् ॥ ४ ॥

० सिंहावलोकितन्यायेन पुनरपि न प्रथमाधिकरणम् १ ॥

द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥५ ॥ न लौकिकानामाचार्यग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ॥ ॥ ६ ॥ दर्शनाच्चान्यपात्रस्य ॥ ७ ॥

---

१ प्रथमाधिकरणशेषोयं पञ्चमसूत्रादिनवमसूत्रान्तो ग्रन्थः ।

तथाग्निहविषोः ॥ ८ ॥ उक्तश्चार्थेऽस-म्बन्धः ॥ ९ ॥

१ दर्विहोमशब्दस्यापूर्वताधि०—४

तस्मिन्सोमः प्रवर्त्तेताव्यक्तत्वात् ॥ १० ॥ न वा स्वाहाकारेण संयोगाद्वषट्कारस्य च निर्देशात्तन्त्रेतेन विप्रतिषेधात् ॥ ११ ॥ शब्दान्तरत्वात् ॥ १२ ॥ लिंगदर्शनाच्च ॥ १३ ॥ उत्तरार्थस्तु स्वाहाकारो यथा सात-दृश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्ति-र्लिंगदर्शनात्पशुवत् ॥ १४ ॥ अनु-

त्तरार्थौ वाऽर्थवत्त्वादानर्थक्याद्धि प्राथम्यस्योपरोधः स्यात् ॥ १५ ॥ नप्रकृतावपीति चेत् ॥ १६ ॥ उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥ तच्चोदना वेष्टेः प्रवृत्तित्वाद्विधिःस्यात्॥१८॥ शब्दसामर्थ्याच्च ॥१९॥ लिंगदर्शनाच्च ॥२०॥ तत्राभावस्य हेतुत्वाद्गुणार्थे स्याददर्शनम् ॥२१॥ विधिरिति चेत् ॥२२॥ न वाक्यशेषत्वाद्गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥ येषां वाऽपरयोर्होमस्तेषां स्याद-

१ प्राकृतस्यो इति वृत्तिग्रन्थे पाठान्तरम् ।

विरोधात् ॥ २४ ॥ तत्रौषधानि चो-द्यन्ते तानि स्थानेन गम्येरन् ॥२५॥ लिंगाद्वा शेषहोमयोः ॥ २६ ॥ प्रति-पत्ती तु ते भवतस्तस्मादतद्विकार-त्वम् ॥ २७ ॥ सन्निपाते विरोधिना-नप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्य-वस्थानादर्थस्थापरिणेयत्वाद्वचनाद-तिदेशः स्यात् ॥ २८ ॥( ४ ) ॥४॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-दर्शने ( दर्विहोमेष्वतिदेशापवादो नाम ) अष्टमस्याध्याय चतुर्थः पादः॥ ८॥४॥

अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

# अथ नवमोऽध्यायः ।

अतिदिष्टेषूहानूहादिविचारो निरूप्यते—

१ अग्निहोत्रादिषूक्तानां धर्माणामपूर्वप्रयुक्तत्वाधिकरणम्—१ वर्णकत्रयम्—३ ॥

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥**

१ प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणम् २ वर्णकद्वये प्रथमं वर्णकम् १ ॥

**संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥**

१ उच्चावचध्वनेः परमापूर्वाप्रयुक्तताधिकरणम् २ द्वितीयतृतीयवर्णके २—३ ॥

तेन त्वर्थेन यज्ञस्य संयोगाद्धर्म-सम्बन्धस्तस्माद्यज्ञप्रयुक्तः स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥

१ फलदेवतासम्बद्धधर्माणामप्यपूर्वप्रयुक्तत्वाधिकरणम्—२ ॥

फलदेवतयोश्च ॥ ४ ॥ न चोदनातो हि ताद्गुण्यम् ॥ ५ ॥

१ धर्माणामदेवताप्रयुक्तत्वाधि०—४ ॥

देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥ आर्थपत्याच्च ॥ ७ ॥ ततश्च तेन सम्बन्धः ॥८॥

---

( १ ) अर्थपेति पाठान्तरं वृत्तिग्रन्थे ।

अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ९ ॥ अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥

१ प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधि०—९ ॥

द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥ अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १२ ॥ अर्थो वा स्यात्प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात् ॥ १३ ॥

---

१ तस्य गुणेति चशब्दरहितं पाठान्तरं वृत्तिग्रन्थे ।

अपूर्वत्वाद्व्यवस्था स्यात् ॥ १४ ॥ तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥ नह्युक्तस्येति चेत् ॥ १६ ॥ नाश्रुतित्वात् ॥१७॥ अधिकारादिति चेत् ॥१८॥ तुल्येषु नाधिकारः स्यादचोदितश्च सम्बन्धः पृथक् सतां यज्ञार्थेनाभिसम्बन्धस्तस्माद्यज्ञप्रयोजनम् ॥ १९ ॥

१ अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्त्वाधिकरणम्--६ ॥

देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशा[1]त्तस्य च तत्र भावात् ॥ २० ॥

(१) निर्देशेति पाठान्तरं वृत्तिग्रन्थे ।

यज्ञस्य वा तत्संयोगात् ॥ २१ ॥
अनुवादश्च तदर्थवत् ॥ २२ ॥

०वाङ्नियमस्यावान्तरापूर्वप्रयुक्तत्वाधि० — ७ ॥

प्रणीतादि तथेति चेत् ॥ २३ ॥
न यज्ञस्याश्रुतित्वात् ॥ २४ ॥ तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥ २५ ॥

१ इष्टकासु सकृद्धिकर्षणाद्यनुष्ठानाधि० — ८ ॥

अग्निधर्मः प्रतीष्टकं सङ्घातात्पौर्ण-

---

१ इदमधिकरणं न पृथक्, किन्तु पूर्वाधिकरणेन सहैक-मेवाधिकरणमिति—अधिकरणन्यायमालायाम् । शास्त्रदीपिकायामपि प्रणीतावाग्यमः षष्ठाधिकरण एवोक्तो न पृथक् । वृत्तिग्रन्थरीत्यां तु पृथगधिकरणम् ।

मासीवत् ॥ २६ ॥ अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २७ ॥ चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् ॥ २८ ॥

१ उत्तमान्येषामङ्गानां पत्नीसंयाजसंस्थाधिकरणम्- ९ ॥

पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥ लिंगाद्वा प्रागुत्तमात् ॥ ३० ॥ अनुवादो वा दीक्षा यथा नक्तं संस्थापनस्य ॥ ३१ ॥ स्याद्वाऽनारभ्य विधानादन्ते लिंगविरोधात् ॥ ३२ ॥

१ सामिधेनीनामभ्यासस्य स्थानधर्मताधिकरणम्— १० ॥

अभ्यासः सामिधेनीनां प्राथम्यात्स्थानधर्मः स्यात् ॥ ३३ ॥

१ सकृदारम्भणीयेष्ट्यनुष्ठानाधि०— ११ ॥

इष्ट्यावृत्तौ प्रयाजवदावर्त्तेतारम्भणीया ॥ ३४ ॥ सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

१ निर्वापमन्त्रे सवित्रादिपदानामनूहाधिकरणम्—१२ ॥

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्राचोदितमप्राप्तं चोदि-

**ताभिधानात् ॥ ३६ ॥ ततश्चावचनं तेषामितरार्थं प्रयुज्यते ॥ ३७ ॥**

२ विकृतावग्निशब्दस्य तण्डुलनिर्वापमन्त्रे धान्यशब्दस्य चोहप्रदर्शकं चेति क्रमाद्वर्णकद्वयात्मकधिकरणम्— १३ ॥

**गुणशब्दस्तथेति चेत् ॥३८॥ न समवायात् ॥ ३९ ॥**

१ इडोपाह्वानमन्त्रे यज्ञपतिशब्दस्यानूहाधिकरणम्— १४ ॥

**चोदिते तु पदार्थत्वाद्विधिवद्विकारः स्यात् ॥ ४० ॥**

१ प्रस्तरप्रहरणसूक्तवाके यजमानपदस्योहाधिकरणम्— १५ ॥

---

१ वृत्तिग्रन्थे इदं सूत्रं नास्ति ।

विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥

२ सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दानूह-स्य सोमक्रयसाधनकाण्डे तस्मै शृतम् इत्या-द्यनूहस्य च, प्रदर्शकं वर्णकद्वयात्मकमधि-करणम्– १६ ॥

असंयोगात्तदर्थेषु तद्विशिष्टं प्र-तीयेत ॥ ४२ ॥ कर्माभावादेवमिति चेत् ॥ ४३ ॥ न परार्थत्वात् ॥ ४४ ॥

१ सारस्वत्यां मेष्यामाध्रिगवचनानूहाधि-करणम्–१७ ॥

लिंगविशेषनिर्देशात्समानविधाने-ष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४५ ॥ पश्वभिधानाद्वा तद्धि चोदनाभूतं

पुंविषयं पुनः पशुत्वम् ॥ ४६ ॥ विशेषो वा तदर्थनिर्देशात् ॥ ४७ ॥ पशुत्वं चैकशब्द्यात्[1] ॥ ४८ ॥ यथोक्तं वा सन्निधानात् ॥ ४९ ॥

१ यज्ञायज्ञिये गिराशब्दस्थाने इराशब्दकर्तव्यताधिकरणम्—१८ ॥

आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ५० ॥ द्वैधं वा तुल्यहेतुत्वात्सामान्याद्विकल्पः स्यात् ॥ ५१ ॥ उद्देशाच्च साम्नः ॥ ५२ ॥ नियमो वा श्रुतिविशेषादितरत्सासदस्यवत् ॥ ५३ ॥

---

१ एकशब्दादिति पाठान्तरम् ।

१ इराशब्दस्य प्रगीततार्थि०—१९ ॥

अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥ ५४ ॥ यत्स्थाने वा तद्गीतिः स्यात्पदान्यत्वप्रधानत्वात् ॥ ५५ ॥ गानसंयोगाच्च ॥ ५६ ॥ वचनमिति चेत् ॥ ५७ ॥ न तत्प्रधानत्वात् ॥ ५८ ॥ ( १९ ) ॥ १६ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने ( उपोद्घातपूर्वकोहविचारारम्भो ) नाम नवमस्याध्यायस्य प्रथमः पादः ॥ ९ ॥ १ ॥

---

२ गीतीनां सामनामत्वे ऊहग्रन्थस्य पौरुषेयत्वे च, क्रमेण वर्णकद्वयात्मकमधि०—१ ॥

सामानि मन्त्रमेके स्मृत्युपदेशा-
भ्याम् ॥ १ ॥ तदुक्तदोषम् ॥ २ ॥

१ साम्न ऋक्संस्कारकर्मताधि०— २ ॥

कर्म वा विधिलक्षणम् ॥ ३ ॥ त-
द्व्यद्रव्यं वचनात्पाकयज्ञवत् ॥ ४ ॥
तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यति-
रेकः प्रदेशश्च ॥ ५ ॥ शब्दार्थत्वात्तु
नैवं स्यात् ॥ ६ ॥ परार्थत्वाच्च शब्दा-
नाम् ॥ ७ ॥ असम्बन्धश्च कर्मणा
शब्दयोः पृथगर्थत्वात् ॥ ८ ॥ सं-
स्कारश्चाप्रकरणेऽग्निवत्स्यात्प्रयुक्तत्वा-
त् ॥ ९ ॥ अकार्य्यत्वाच्च शब्दानाम-

प्रयोगः प्रतीयेत ॥ १० ॥ आश्रित-
त्वाच्च ॥ ११ ॥ प्रयुज्यत इति
चेत् ॥ १२ ॥ ग्रहणार्थं प्रतीयेत ॥ १३ ॥

१ऋृचै प्रत्यृचं कृत्स्नसाम्नःसमापनार्थे० ३॥

तृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥
शब्दार्थत्वाद्विकारस्य ॥ १५ ॥ दर्श-
यति च ॥ १६ ॥ वाक्यानां तु विभ-
क्तत्वात्प्रतिशब्दं समाप्तिःस्यात्संस्का-
रस्य तदर्थत्वात् ॥ १७ ॥ तथा
चान्यार्थदर्शनम् ॥ १८ ॥ अनवानो-

---

१ अश्रुतत्वाच्चेति क्वचित् पाठः ।

प्रदेशश्च तद्वत् ॥ १९ ॥ अभ्यासेने-
तरा श्रुतिः ॥ २० ॥

१ समास्वेव तिसृष्वर्क्षु गानाधि०-४ ॥

तदभ्यासः समासः स्यात् ॥ २१ ॥
लिङ्गदर्शनाच्च ॥ २२ ॥

१ उत्तराग्रन्थस्थयोर्ऋचोरेवोत्तरयो गीयती-
त्यत्र ग्रहणाधि०५-प्रथमवर्णकम् ॥

नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्र-

---

१ 'अत्र पञ्चमाधिकरणे २३-२४ तमसूत्रमुपन्यस्येदं प्रथमवर्णकमित्युक्त्वा, ततोऽतिजगत्यामभ्यस्यमानाय त्रिश्लोकगानाधिकरणमित्युक्त्वा पुनरपि २१-२२ २३ २४ तमसंख्याकान्येव सूत्राण्युपन्यस्य द्वितीयवर्णकमित्युक्तम्

**तीयेत ॥ २३ ॥ ऐकार्थ्याच्च तदू-भ्यासः ॥ २४ ॥**

४ बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य बृहतीविष्टारपङ्क्त्योः प्रग्रथनेन रौरवयौधाजय सान्नोः अनुष्टुब्गायत्र्योः प्रग्रथनेन श्यावाश्वान्धीगवयोः, पादप्रग्रथनेन ब्रह्मसाम्नश्च, गानसाधकं क्रमेण वर्णकचतुष्टयात्मकमाधिकरणम् ६॥

**प्रागाथिकं तु ॥ २५ ॥ स्वे च ॥ २६ ॥ प्रगाथे च ॥२७॥ लिङ्ग-दर्शनाव्यतिरेकाच्च ॥ २८ ॥**

१ गीतिसंपादकाक्षरविकारादीनां विकल्पाधिकरणम्— ७ ॥

**अर्थैकत्वाद्विकल्पः स्यात्॥२९॥**

१ सांन्नैव स्तूत्रे विधानस्य, प्रगीतयैवर्चा बह्वृचुपस्थानस्य याज्यानुवाक्यादीनां तानेन प्रयोगस्य च, साधकं क्रमेण वर्णकत्रयात्मकमधिकरणम्—८ ॥

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तद्दर्शत्वात् ॥ ३० ॥ वचनाद्विनियोगः स्यात् ॥ ३१ ॥**

१ उत्तराऽवर्णवशेन गानाधिकरणम्—९ ॥

**समप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्॥ ३२ ॥ वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्॥३३॥**

१ उत्तरयोः स्तोभातिदेशाधिकरणम्—१०॥

**स्तोभस्यैके द्रव्यान्तरे निवृत्तिम्-**

न्यवत् ॥ ३४ ॥ सर्वातिदेशस्तु सामा-
न्याल्लोकवद्विकारः स्यात् ॥ ३५ ॥
अन्वयं चापि दर्शयति ॥ ३६ ॥ निवृ-
त्तिर्वाऽर्थलोपात् ॥ ३७ ॥ अन्वयो
वार्थवादः स्यात् ॥ ३८ ॥

१ स्तोभलक्षणाधिकरणम्— ११ ॥

अधिकं च विवर्णं च जैमिनिः
स्तोभशब्दत्वात् ॥ ३९ ॥

२ नीवारादिषु प्रोक्षणावघातादिधर्मानुष्ठा-
नाधिकरणम्— १२ ॥

धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकार-
व्यतिक्रमप्रतिषेधे चोदनानुबन्धः सम-
वायात् ॥ ४० ॥

१ परिधौ यूपधर्मानुष्ठानाधिकरणम्-१३॥

तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥१४॥ आवेश्येरन्वार्थवत्त्वात्संस्कारस्य तदर्थत्वात् ॥ ४२ ॥ आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥

१ भृतादौ प्रणीताधर्मानुष्ठनाधिकरणम्-१४॥

परार्थे न त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥ क्रियेरन्वार्थनिवृत्तेः ॥ ४५ ॥

१ बृहद्रथन्तरयोधर्मव्यवस्थाधिकरणम् १५॥

एकार्थत्वादविभागः स्यात् ॥४६॥

निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥

१ कण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयाधिकरणम्—१६ ॥

अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥

१ द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम्— १७ ॥

उभयसाम्नि चैवमेकार्थापत्तेः ४९ ॥

स्यार्थत्वाद्वा व्यवस्था स्यात्प्रकृतिवत् ॥ ५० ॥

१ सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणम्— १८ ॥

पार्वणहोमयोस्त्वप्रवृत्तिः समुदा-

यार्थसंयोगात्तद्भोज्या हि ॥ ५१ ॥ कालस्येति चेत् ॥ ५२॥ नाप्रकरणत्वात् ॥ ५३ ॥ मन्त्रवर्णाच्च ॥५४॥ तदभावेऽग्निवदिति चेत् ॥ ५५ ॥ नाधिकारिकत्वात् ॥ ५६ ॥

१ दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम्– १९ ॥

उभयोरविशेषात् ॥ ५७ ॥ पदभोज्या वा तद्विषयौ ॥ ५८ ॥

१समिदादीनां यागनामधेयताधि०–२० ॥

प्रयाजेऽपीति चेत् ॥ ५९ ना

-चोदितत्वात् ॥ ६० ॥(२०)॥२८ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने (सपरिकरसामोहविचारो नाम) नवमस्याध्यायस्य द्वितीयः पादः ॥ ९ ॥ २॥

१ विकृतौ मन्त्रगतानां व्रीह्यादिशब्दानामूहाधिकरणम्—१ ॥

प्रकृतौ यथोत्पत्ति वचनमर्थानांत[1]थोत्तरस्यां ततौ[2] तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥ लिंगदर्शनाच्च ॥२

२ पौंडरीकेषु बर्हिष्षु स्तरणमन्त्रोहाधि०२ ॥

जातिनैमित्तिकं यथास्थानम् ३ ॥

लिंगदर्शनाच्च ॥ ४ ॥

१ र्थानामुत्तोति पाठ० । (२) ततावितो नास्ति क्वचित् । (इदं सूत्रं वृत्तिग्रन्थेधिकं दृश्यते ।

अविकारमेकेऽनार्षत्वात् ॥ ५ ॥ लिंगदर्शनाच्च ॥ ६ ॥ विकारो वा तदुक्ते हेतुः ॥ ७ ॥ लिंगं मन्त्रचिकिर्षार्थम् ॥ ८ ॥ नियमो वोभयभागित्वात् ॥ ९ ॥

१ अग्नीषोमीयपशौ लौकिकयूपस्पर्शे प्रायश्चिताधिकरणम्—३ ॥

लौकिके दोषसंयोगादप्रवृत्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥ १० ॥

३ द्विपशुयागे पाशमन्त्रयोरेकवचनबहुवचनान्तयोर्द्विवचनान्तेनोहाधिकरणम्—४ ॥

---

१ समसंगादिति वृत्तिमन्थे पाठान्तरम् ।

अन्यायस्त्वविकारेण दृष्टप्रतिघा-
तित्वादविशेषाच्च तेनास्य ॥ ११ ॥
विकारो वा तदर्थत्वात् ॥ १२॥ अपि
त्वन्यायसम्बन्धात्प्रकृतिवत्परेष्वपि य
थार्थं स्यात् ॥ १३ ॥ यथार्थं त्वन्या
यस्याचोदितत्वात् ॥ १४ ॥ छन्दसि
तु यथादृष्टम् ॥ १५ ॥ अन्यायस्या-
चोदितत्वात् ॥ १६ ॥

१ अग्नीषोमीयपशौ पाशैकत्वबहुत्वाभि-
धायिमन्त्रयोर्विकल्पाधिकरणम्—९ ॥

---

१ न्याय्यश्चेति वृत्तिग्रन्थे पाठान्तरम् ।

२ थं चान्यायस्येति वृत्तिग्रन्थे पाठान्तरम् ।

३ इदं सूत्रं वृत्तिग्रन्थेऽधिकं दृश्यते ।

विप्रतिपत्तौ विकल्पः स्यात्तत्स मत्वाद्गुणे त्वन्यायकल्पनैकदेशत्वात् ॥ १७ ॥ प्रकरणविशेषाच्च ॥ १८ ॥ उत्कर्षो वा द्वियज्ञवत् ॥ १९ ॥ अर्था-भावात्तु नैवं स्याद्गुणमात्रमितरत् ॥ २० ॥ द्यावोस्तथेति चेत् ॥ २१ ॥ नोत्पत्तिशब्दत्वात् ॥ २२ ॥

१ दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे " पत्नींस-न्नह्य " इति मन्त्रस्यानूहाधिकरणम्—६ ॥

अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत् ॥ २३ ॥

---

१ इदं सूत्रं वृत्तिग्रन्थेऽधिकं दृश्यते ।

१ द्विपत्नीके विकृतियागे "पत्नीं सन्नह्य" इति मन्त्रस्यानूहाधिकरणम्—७ ॥

**विकृतौ चापि तद्वचनात् ॥ २४ ॥**

१ सवनीयपशूनामग्नीषोमीयसमानविधानत्वे "प्रास्मा अग्निम्" इतिमन्त्रेऽनूहाधि०—८

**अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ २५ ॥**

१ नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्यानूहाधिकरणम्—९ ॥

**प्रतिनिधौ चाविकारात् ॥ २६ ॥**

**अनाम्नानादशब्दत्वमभावाच्चेतरस्य**

---

१ आध्रिगावित्ति जैमिनीयन्यायमालायां पाठान्तरम्

स्यात् ॥ २७ ॥ तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २८ ॥ उक्तं च तत्त्वमस्य ॥ २९ ॥

१ द्विपशुयागे "सूर्यं चक्षुर्गमयतात्" इत्यादिमन्त्राणामनूहाधिकरणम्-१० ॥

संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ ३० ॥ लिङ्गदर्शनाच्च ॥ ३१ ॥

१ द्विपशुयागेऽध्रिगुप्रैषे "एकधा" इत्यस्याभ्यासाधिकरणम् ११ ॥

एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ॥ ३२ ॥ सविकारो वा बहूनामेककर्मवत् ॥ ३३ ॥

सकृत्त्वं चैकध्यं स्यादेकत्वात्स्वचोऽन-
भिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेनैवं
विवृद्धावभिधानं स्यात् ॥ ३४ ॥

३ द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य
देवतानुसारेणोहाधि०—१२ ॥

मेधपतित्वं स्वामिदेवतस्य समवा-
यात्सर्वत्र च प्रयुक्तत्वात्तस्यान्यायानि-
गदत्वात्सर्वत्रैवाविकारः स्यात् ॥ ३५ ॥
अपि वा द्विसमवायोऽर्थान्यत्वे यथा-
संख्यं प्रयोगः स्यात् ॥ ३६ ॥ स्वा-

१ स्त्वं वेकेति जैमि० न्या० पाठान्तरम् ।
२ सेन मिमीति जैमि० न्या० पाठान्तरम् ।

मिनो वैकशब्दादुत्कर्षौ देवतायां स्या
त्पत्न्यां द्वितीयशब्दः स्यात् ॥२७॥
देवता तु तदाशीष्ट्वात्सम्प्राप्तत्वात्स्वा-
मिन्यनर्थिका स्यात् ॥ २८ ॥ उत्स-
र्गाच्च भक्त्या तस्मिन्पतित्वं स्यात्
॥ ३९ ॥ उत्कृष्येतैकसंयुक्तौ द्विदेवते
सम्भवात् ॥ ४० ॥ एकस्तु समवाया
त्तस्य तल्लक्षणत्वात् ॥ ४१॥ संसर्ग-
त्वाच्च तस्मात्तेन विकल्पः स्यात्
॥४२॥एकत्वेपि न गुणाऽपायात्४३

१ इदं सप्तमाधिकं जैमिनीयन्यायमालायाम् ।

१ बहुदैवत्ये पशावप्येकवचनान्तमेधपति-शब्दस्य विकल्पाधिकरणम्—१३ ॥

**नियमो बहुदेवते विकारः स्यात् ॥४४॥ विकल्पो वा प्रकृतिवत् ॥४५॥**

१ एकादशिन्यामेकवचनान्तमेधपतिशब्दस्योहाधिकरणम्—१४ ॥

**अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ४६॥ (१४) ॥ १८ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने नवमस्याध्यायस्य

( मन्त्रोहविचारो नाम )

तृतीयः पादः ॥ ९॥३ ॥

३ "षड्विंशतिरस्य वङ्क्रयः" इत्यादौ समस्यो-
हाधिकरणम्—१ ॥

षड्विंशतिरभ्यासेन पशुगणे त-
त्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वाद्-
विकारे हि तासामकार्त्स्न्येनाभि-
सम्बन्धो विकारान्न समासः स्याद्-
संयोगाच्च सर्वाभिः ॥ १ ॥ अभ्यासे-
ऽपि तथेति चेत् ॥ २ ॥ न गुणाद्-
र्थकृतत्वाच्च ॥ ३ ॥ समासेऽपि तथे-
ति चेत् ॥ ४ ॥ नासम्भवात् ॥ ५ ॥
स्वाभिश्च वचनं प्रकृतौ तथेह स्यात्
॥ ६ ॥ वङ्क्रीणान्तु प्रधानत्त्व-

त्समासेनाभिधानं स्यात्प्राधान्यमाभि-
गोस्तदर्थत्वात् ॥ ७ ॥ तासां च-
कृत्स्नवचनात् ॥८॥ अपि त्वसन्निपा-
तित्वात्पत्नीवदाम्नातेनाभिधानं स्या-
त् ॥ ९ ॥ विकारस्तु प्रदेशत्वाद्यज-
मानवत् ॥ १० ॥ अपूर्वत्वात्तथा प-
त्न्याम् ॥ ११ ॥ आम्नातस्त्वविकारा-
त्सङ्ख्यासु सर्वगामित्वात् ॥ १२ ॥
सङ्ख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पु-
नःप्रधानम् ॥ १३ ॥ अभ्यासो वाऽ-
विकारास्यात् ॥ १४ ॥ अनाम्नात-

१ इदं सूत्रं वृत्तिग्रन्थे नास्ति, भाष्यकृन्मते जै०
न्या० मा० चास्ति ।

वचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः ॥ १५ ॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मात्समासशब्दः स्यात् ॥ १६ ॥

२ आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनविकल्पाधिकरणम्—२

अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७ ॥

३ आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविकल्पाधिकरणम्—३ ॥

तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥ ऋग्वा

स्यादाम्नातत्वादविकल्पश्च न्यायः ॥ १९ ॥ तस्यां तु वचनादैरवत्पदविकारः स्यात् ॥ २० ॥ सर्वप्रतिषेधो वा संयोगात्पदेन स्यात् ॥ २१ ॥

२ अग्नीषोमीयपशावुरूकशब्दस्य वपापरत्वाधिकरणम्—४ ॥

वनिष्ठुसन्निधानादुरूकेण वपाभिधानम् ॥ २२ ॥

१ आग्निगौ प्रशसाशब्दस्य प्रशंसापरत्वाधिकरणम्—९ ॥

प्रशंसाऽस्यभिधानम् ॥ २३ ॥ बाहुप्रशंसा वा ॥ २४ ॥

---

१ प्रशंसात बालमन्थं पाठान्तरम् ।

१ अग्निगुप्रैपे श्येनादिशब्दानां कार्त्स्न्य-वाचकत्वाधिकरणम्—६॥

**श्येन-शला-कश्यप-कवषोरुस्रेकपर्णं-ष्वाकृतिवचनं प्रसिद्धसन्निधानात्२५**

**कार्त्स्न्यं वा स्यात्तथाभावात्॥२६॥**

**अध्रिगोश्च तदर्थत्वात् ॥ २७ ॥**

१ दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिस्मतया अननुष्ठानाधिकरणम्—७ ॥

**प्रासंगिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थो हि विधीयते॥ २८ ॥**

२ वषल्केकेति जै॰ न्या॰ मा॰ पाठान्तरम् ।
३ उत्तरसूत्रेण सहैकमेव सूत्रमिदं वृत्तिग्रन्थे ।

१ धार्योद्धाने प्रायश्चित्तरूपज्योतिष्मत्यनुष्ठानाधिकरणम्—८ ॥

धारणे च परार्थत्वात् ॥ २९ ॥ क्रियार्थत्वादितरेषु कर्म स्यात् ॥ ३० ॥

१ दर्शार्थोद्धरणस्यामन्त्रकत्वाधि०—९ ॥

न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥

१ प्रायणीयचरौ प्रधानधर्माणामननुष्ठानाधिकरणम्—१० ॥

प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥ ३२ ॥ संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥ तत्प्र-

(१) वृत्तिग्रन्थे प्रधानेत्यपपाठो दृश्यते ।

तिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥ अधर्मत्वमप्रदानात्प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥ परो नित्याऽनुवादः स्यात् ॥ ३६ ॥ विहितप्रतिषेधो वा ॥ ३७ ॥ वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम् ॥ ३८ ॥ व्रतधर्माच्च लेपवत् ॥ ३९ ॥ रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥

१ अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्- ११ ॥

अभ्युदये दोहापनयः स्वधर्मा

स्यात्प्रवृत्तत्वात् ॥ ४१ ॥ श्रृतोपदेशाच्च ॥ ४२ ॥

१ पशुकामेष्टौ दधिश्रृतयोः प्रदेयधर्माननुष्ठानाधिकरणम्— १२ ॥

अपनयो वार्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥ लक्षणार्था श्रृतश्रुतिः ॥ ४४ ॥

२ ज्योतिष्टोमे श्रयणानां प्रदेयधर्माननुष्ठानाधिकरणम्— १३ ॥

श्रयणानां त्वपूर्वत्वात्प्रदानार्थविधानं स्यात् ॥ ४५ ॥ गुणो वा श्रयणार्थ-

---

१ इदं सूत्रं वृत्तिग्रन्थे नास्ति, भाष्ये त्वस्ति ।

त्वात् ॥ ४६ ॥ अनिर्देशाच्च ॥४७॥ श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥ अ-र्थवादश्च तदर्थत्वात् ॥ ४९ ॥ सं-स्कारं प्रति भावाच्च तस्मादन्यप्रधा-नम् ॥ ५० ॥

१ "ईशानाय परस्वतः" इत्यनेनाश्वमेधे यागान्तरविधानाधिकरणम्- १४ ॥

पर्य्यग्निकृतानामुत्सर्गे तादर्थ्यमु-पधानवत् ॥ ५१ ॥ शेषप्रतिषेधो वा ऽर्थाभावादिडान्तवत्॥५२॥ पूर्व (व) त्वाच्च शब्दस्य संस्थापयतीति चा-

प्रवृत्ते नोपपद्यते ॥ ५३ ॥ प्रवृत्तेर्यं-ज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारितत्वाद्यथा प्रयाजप्रति-षेधे ग्रहणमाज्यस्य ॥ ५४ ॥ क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५५॥

२ "आज्येन शेषं संस्थापयति" इत्यनेन कर्मान्तरविधानाधिकरणम्—१५॥

आज्यसंस्थाप्रतिनिधिः स्याद्द्रव्यो-त्सर्गात् ॥ ५६ ॥ समाप्तिवचनात् ॥ ५७ ॥ चोदना वा कर्मोत्सर्गाद्-

१ इदं सूत्रं वृत्तिग्रन्थे नास्ति ।

न्यैः स्यादविशिष्टत्वात् ॥ ५८ ॥ अनिज्यां च वनस्पतेः प्रसिद्धाऽन्तेन दर्शयति ॥५९॥ संस्था (ख्या)तद्देवतात्वात्स्यात् ॥ ६० ॥(१५)॥२०॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने नवमस्याध्यायस्य( मंत्रोहप्रसङ्गापतितविचारो नाम ) चतुर्थः पादः ॥ ९ ॥ ४ ॥

समाप्तो नवमोध्यायः ॥ ९ ॥

## अथ दशमोध्यायः ।

तत्र कृष्णलेषु चोदकप्राप्तावघातस्य वितुषीकरणासंभवेन लोप इत्येवमादिबाधो निरूप्यते-

९ विकृतौ कुशार्थप्रापकबाधसाधकं, कृष्णलेष्ववहन्तिबाधसाधकं वैश्वदेव्यां विष्णवावाहनबाधसाधकं च, इतिवर्णकत्रयात्मकमधिकरणम्—१ ॥

विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

१ दीक्षणीयादिष्वारम्भणीयाबाधाधि०—२ ॥

इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥

१ अनुयाजादिष्वारम्भणीयाबाधाधि०—३ ॥

**प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्नि-
वर्त्तेतानङ्गत्वात् ॥ ५ ॥**

१ आरम्भणीयायामारम्भणीयाबाधा-
धिकरणम्—४ ॥

**तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥
न वांगभूतत्वात् ॥ ७ ॥ एकवाक्य-
त्वाच्च ॥ ८ ॥**

२ खलेवाल्यां यूपाहुतिबाधाधि०—५ ॥

**कर्म च द्रव्यसंयोगार्थमर्थाभावा-
न्निवर्त्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥**

२ साद्यस्के स्थाण्वाहुतिबाधाधि०—६ ॥

**स्थाणौ तु देशमात्रत्वादनिवृत्तिः**

प्रतीयेत ॥ १० ॥ अपि वा शेषभू-
तत्वात्संस्कारः प्रतीयेत ॥ ११ ॥ स-
माख्यानं च तद्वत् ॥ १२ ॥ मन्त्रव
र्णश्च तद्वत् ॥ १३ ॥

२ उत्तमप्रयाजस्य संस्कारकर्मताधि०—७॥

प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥
लिंगदर्शनाच्च ॥ १५ ॥

२ अग्नियागस्याराहुपकारकत्वाधि०—८ ॥

तथाज्यभागाग्निरपीतिचेत् ॥ १६ ॥
व्यपदेशाद्देवतान्तरम् ॥ १७ ॥ सम-
त्वाच्च ॥ १८ ॥

२ पशुपुरोडाशयागस्य देवतासंस्कारकत्वाधिकरणम्—९ ॥

पशावपीति चेत् ॥ १९ ॥ न तद्भूतवचनात् ॥ २० ॥ लिंगदर्शनाच्च ॥ २१ ॥ गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥ २२ ॥ अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदंगानामर्थसंयोगात् ॥ २३ ॥ व्यूढवचनं च विप्रतिपत्तौ तदर्थत्वात् ॥ २४ ॥ गुणेपीति चेत् ॥२५॥ नासंहानात्कपालवत् ॥२६॥ ग्रहाणां च सम्प्रतिपत्तौ तद्वचनं तद-

र्थत्वात् ॥ २७ ॥ ग्रहाभावे तद्वचनम् ॥ २८ ॥ देवतायाश्च हेतुत्वे प्रसिद्धं तेन दर्शयति ॥ २९ ॥ अविरुद्धोपपत्तिरर्थापत्तेः श्रुतवद्गुणभूतविकारः स्यात् ॥ ३० ॥ सद्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥ विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥ अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥

२ सौर्ययागे चरुशब्दस्यौदनवाचकत्वाधिकरणम्— १० ॥

चरुर्हविर्विकारः स्यादिज्यासंयो-

गात् ॥ २४ ॥ प्रसिद्धग्रहणत्वाच्च २५ ॥ ओदनो वाऽन्नसंयोगात् ॥ २६ ॥ न व्यर्थत्वात् ॥ २७ ॥ कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ २८ ॥ गुणमुख्यविशेषाच्च ॥ २९ ॥ तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥ लिङ्गदर्शनाच्च ॥ ४१ ॥ ओदनो वाप्रयुक्तत्वात् ॥ ४२ ॥ अपूर्वव्यपदेशाच्च ॥ ४३ ॥ तथा च लिंगदर्शनम् ॥ ४४ ॥

४ सौर्यचरोः स्थाल्यामेव पाकाधि०—११॥

स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥ न एकस्मिन्वा

विप्रतिषेधात् ॥ ४६ ॥ न वाऽर्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात्पाकलाभः स्यादनियमोऽविशेषात् ॥ ४७ ॥ चरौ लिङ्गदर्शनात् ॥ ४८ ॥

० सौर्यचरौ पेषणबाधाधिकरणम्— १ ॥

तस्मिन्पेषणमनर्थलोपात्स्यात् ४९ ॥

अक्रिया वा अपूपहेतुत्वात् ॥ ५० ॥

० सौर्यचरौ संयवनबाधाधिकरणम्—२ ॥

पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥

---

१ इत आरभ्यापादपरिसमाप्ति मन्दप्रज्ञार्थानि सूत्राणि । तत एवाधिकरणसंख्या न लिखिता कारिकासंख्या च । स्पष्टं चैतज्जैमिनीयन्यायमालाटिप्पण्याम् ।

सौर्यचरौ संवपनबाधाधिकरणम्- ३ ॥

**संवपनं च तादर्थ्यात् ॥ ५२ ॥**

० सौर्यचरौ सन्तापनबाधाधिकरणम्--४॥

**सन्तापनमधःश्रपणात् ॥ ५३ ॥**

० सौर्यचरावुपधानबाधाधि०- ५ ॥

**उपधानं च तादर्थ्यात् ॥ ५४ ॥**

० सौर्यचरौ पृथुश्लक्ष्णबाधाधि०- ६ ॥

**पृथुश्लक्ष्णे चाऽनपूपत्वात् ॥ ५५ ॥**

० सौर्यचरावभ्यूहबाधाधि०-७ ॥

**अभ्यूहश्चोपरिपाकार्थत्वात् ५६ ॥**

० सौर्यचरौ ज्वलनबाधाधि०-८ ॥

**तथा च ज्वलनम् ॥ ५७ ॥**

० सौर्यचरौ व्युद्धृत्यासादनबाधाधिकरणम्—९ ॥

**व्युद्धृत्यासादं च प्रकृतावश्रुतित्वात् ॥ ५८ ॥ ( ११+९ ) ॥२३॥**

श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने ( वेदिनिष्पादनद्वारलोपप्रयोज्योद्धननादिबाधावितुषीकरणद्वारलोपप्रयोज्यावघातबाधयोर्निरूपणं नाम ) दशमस्याध्यायस्य प्रथमः पादः ॥ १० ॥ १ ॥

---

१ कृष्णले चरौ पाकानुष्ठानाधि०—१ ॥

**कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥**

**स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत् ॥ २ ॥**

१ कृष्णले उपस्तरणाभिघारणयोर्बाधाधिकरणम्— २ ॥

उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥ क्रियेत वाऽर्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥ अकर्म वा चतुर्भिराप्तिवचनात्सह पूर्णं पुनश्चतुरवत्तम् ॥ ५ ॥ क्रिया वा मुख्यावदानपरिमाणात्सामान्यात्तद्गुणत्वम् ॥ ६ ॥ तेषां चैकावदानत्वात् ॥ ७ ॥ आप्तिः संख्या समानत्वात् ॥ ८ ॥ सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥ विलपकस्त्वेकावदान-

त्वात् ॥ १० ॥ सर्वविकारे त्वभ्यासा-
नर्थक्यं हविषो हीतरस्य स्यादपि
वा स्विष्टकृतः स्यादितरस्यान्याय्य-
त्वात् ॥११॥ अकर्म वा संसर्गार्थनि-
वृत्तत्वात्तस्यादानसमर्थत्वात् ॥१२॥

१ कृष्णलचरौ भक्षसद्भावाधिकरणम्—३ ॥

भक्षाणां तु प्रीत्यर्थत्वादकर्म स्या-
त् ॥ १३ ॥ स्याद्वा निधानदर्शनात्
॥ १४ ॥ वचनं त्वाज्यभक्षं प्रकृतौ
स्यादभागित्वात् ॥ १५ ॥ वचनं वा
हिरण्यस्य प्रदानवदाज्यस्य गुणभू-
तत्वात् ॥ १६ ॥

१ कृष्णलचरौ सहपरिहारविधानाधि०-४ ॥

**एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥**

१ कृष्णलचरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम्- ५ ॥

**सर्वत्वंच तेषामधिकारात्स्यात् १८॥**

**पुरुषापनयो वा तेषामवाच्यत्वात् १९**

१ भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम्- ६ ॥

**पुरुषापनयात्स्वकालत्वम् ॥२०॥**

ब्रह्मभक्षे चतुर्धा करणाभावाधि०-७ ॥

**एकार्थत्वादविभागःस्यात् ॥२१ ॥**

१ ऋत्विग्दानस्यानत्यर्थताधि० ८ ॥

ऋत्विग्दानं धर्ममात्रार्थं स्याद्दातिसामर्थ्यात् ॥ २२ ॥ परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ दक्षिणायुक्तवचनाच्च ॥ २४ ॥ नचाऽन्येनानम्येत परिक्रयात्कर्मणः परार्थत्वात् ॥ २५ ॥ परिक्रीतवचनाच्च ॥ २६ ॥ सनिवन्ये च भृति वचनात् ॥ २७॥ नैष्कर्तृकेण संस्तवात् २८॥

२ ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधि० ९॥

शेषभक्षाश्च तद्वत् ॥ २९ ॥ सं-

---

१ इदं सूत्रं वार्तिककृन्मते नास्ति ।

एकारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ शेषे च समत्वात् ॥ ३१ ॥ स्वामिनि च दर्शनात्तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥ तथा चान्यार्थदर्शनम् ॥ ३३ ॥

१ सत्रे ऋत्विग्वरणाभावाधि०-१० ॥

वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ ३४ ॥

१ सत्रे परिक्रयाभावाधिकरणम्-११ ॥

परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥ प्रतिषेधश्च कर्मवत् ॥ ३६ ॥ स्याद्वा

१ न्यायमालाकृन्मते इदमाधिकं सूत्रम् ।

प्रसर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥

न दक्षिणाशब्दात्तस्मान्नित्यानुवादः स्यात् ॥ ३८ ॥

२ उदवसानीये दानस्य परिक्रयार्थत्वाधिकरणम्–१२ ॥

उदवसानीयः सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥

न त्वतत्प्रकृतित्वादिभक्तचोदितत्वात् ॥ ४० ॥

१ उदवसानीयस्यर्त्विजामेकैकेनानुष्ठानाधिकरणम्–१३ ॥

तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः स्यात् ॥ ४१ ॥

१ उदवसानीयस्यार्त्विजां सत्रिभ्यो भेदा-
धिकरणम्-१४ ॥

**तत्रान्यानृत्विजो वृणीरन् ॥४२॥**

१ पृष्ठशमनीये प्रत्येकं यष्टृताधिकरणम्०१५

**एकैकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥**

१ कामेष्टौ दानस्यादृष्टार्थताधिकरणम्-१६

**कामेष्टौ च दानशब्दात् ॥ ४४ ॥**

**वचनं वा सत्रत्वात् ॥ ४५ ॥**

१ दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थ-
ताधिकरणम्-१७ ॥

**द्वेष्ये वा चोदनादक्षिणापनयात् ४६।**

---

१ द्वेष्ये चाचोदेति जै० न्या० मा० माठा० ।

१ जीवतामस्थियज्ञाधिकरणम्—१८ ॥

अस्थियज्ञोऽविप्रतीषेधादितरेषां
स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥

यावदुक्तमुपयोगः स्यात् ॥ ४८ ॥

१ अस्थियागेस्थ्नां जपाद्यननुष्ठानाधिकरणम्—१९ ॥

यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥

१ अस्थियज्ञे शाखामानशुक्रस्पर्शाधि० २० ॥

क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ५०

१ अस्थियागेस्थ्नां काम्यकर्माद्यनुष्ठानाधिकरणम्—२१ ॥

काम्यानि तु न विद्यन्ते कामा-

**ज्ञानाद्यथेतरस्यानुच्यमानानि॥८१॥**

१ अस्थियज्ञेऽस्थ्नां सूक्तवाकगताशासनान
नुष्ठानाधिकरणम्—२२ ॥

**ईहार्थाश्चाभावात्सूक्तवाकवत् ८२॥ स्युर्वाऽर्थवादत्वात् ॥ ८३ ॥ नेच्छाभिधानत्तदभावादितरास्मिन्॥ ८४ ॥**

१ अस्थियज्ञे होतृकामाभावाधि०२३ ॥

**स्युर्वा होतृकामाः ॥ ८५ ॥ न तदाशीष्ट्वात् ॥ ८६ ॥**

१ यजमानस्य मरणेपि सर्वस्वारस्यसमाप-
नाधिकरणम्—२४ ॥

**सर्वस्वारस्यदिष्टे गतौ समापनं न**

विद्यते कर्मणो जीवसंयोगात् ॥५७॥
स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥५८॥
सर्वस्वारे कार्यबाध्यव्यवस्थाधि०२५॥
गते कर्मास्थियज्ञवत् ॥ ५९ ॥

१ सर्वस्वारे यजमानस्य दिष्टगतावप्यायु-
राशंसनाधिकरणम्—२६ ॥

जीवत्यवचनमायुराशिषस्तदर्थत्वा-
त् ॥ ६० ॥ वचनं वा भागित्वात्प्रा-
ग्यथोक्तात् ॥ ६१ ॥

१द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् २७॥
क्रिया स्याद्धर्ममात्राणाम् ॥ ६२॥
१ पवमानेष्टौ सर्वनिर्वापानुष्ठानाधि०२८ ॥

गुणलोपे तु मुख्यस्य ॥ ६३ ॥

३ वाजपेये मुष्टिलोपाधिकरणम्--२९ ॥

मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात्स्यात् ॥ ६४ ॥ न निर्वापशेषत्वात् ॥ ६५ ॥ संख्या तु चोदनां प्रति सामान्यत्तद्विकारः संयोगाच्च परं मुष्टेः ॥ ६६ ॥ न चोदनाभिसम्बन्धात्प्रकृतौ संस्कारयोगात् ॥ ६७

१ धेन्वादिशब्दानां गोवाचिताधि०--३०॥

औत्पत्तिके तु द्रव्यतो विकारः स्याद्कार्यत्वात् ॥ ६८ ॥

१ पे च मुख्येति जैमिनीयन्यायमालाकृत्पाठः ।

१ वायव्यं श्वेतमित्यत्राजस्यैवालम्भना-
धिकरणम्—३१ ॥

नैमित्तिके तु कार्यत्वात्प्रकृतेः स्या-
त्तदापत्तेः ॥ ६९ ॥

२ खलेवालीतण्डुलयोः स्वादिरत्वेहत्वाऽनि-
यमाधिकरणम्—३२ ॥

विप्रतिषेधे तद्वचनात्प्राकृतगुण-
लोपः स्यात्तेन कर्मसंयोगात् ॥७०॥

१ खलेवाल्यां तक्षणाद्यननुष्ठानाधि०—३३

परेषां प्रतिषेधः स्यात् ॥ ७१ ॥

प्रतिषेधाच्च[2] ॥ ७२ ॥

---

१ तेन च केति जै० न्या० मा० पाठः ।
२ विप्रेति वृत्तिकृत्पाठः ।

२ खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम्—३४ ॥

**अर्थाभावे संस्कारत्वं स्यात्॥७३॥**

२ महापितृयज्ञे धानास्ववघातानुष्ठानमिति भाष्यमतेन पेषणस्य प्राकृततावोधकत्वमिति वार्तिकमतेन च सहितमधिकरणम्—३५ ॥

**अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ७४ ॥ (३५) ॥ ४३॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने दशमस्याध्यायस्य ( संक्षिप्योक्तद्वारलोपस्योदाहरणैर्विस्तरणं नाम ) द्वितीयः पादः ॥ १० ॥ २ ॥

---

२ पश्वादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम्—१ ॥

विकृतौ शब्दवत्त्वात्प्रधानस्य गु-
णानामधिकोत्पत्तिः सन्निधानात् ॥
॥ १ ॥ प्रकृतिवत्त्वस्य चानुपरोधः ॥ २ ॥
चोदनाप्रभुत्वाच्च ॥ ३ ॥ प्रधानं
त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्तस्य
विध्युपलक्षणात्सर्वो हि पूर्ववान्विधि-
रविशेषात्प्रवर्तितः ॥ ४ ॥ न चांग-
विधिरनङ्गे स्यात् ॥ ५ ॥ कर्मणश्चै-
कशब्द्यात्सान्निधानविधेराख्यासंयोगो-
गुणेन तद्विकारः स्याच्छब्दस्य विधि-
गामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥
अकार्यत्वाच्च नाम्नः ॥ ७ ॥

तुल्याच प्रभुता गुणे ॥ ८ ॥ सर्वमेवं प्रधानमिति चेत् ॥ ९ ॥ तथाभूतेन संयोगाद्यथार्थविधयः स्युः ॥ १० ॥ विधित्वं चाविशिष्टं वैकृतैः कर्मण योगात्तस्मात्सर्वप्रधानार्थम् ॥ ११ ॥ समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥ १२ ॥

१ 'हिरण्यगर्भ' इत्यादिमन्त्रस्योत्तराघार-
गुणताधिकरणम्—२ ॥

हिरण्यगर्भः पूर्वस्यः मन्त्रलिं-

---

२ विशिष्टमेवं प्राकृतानां वैकृतीति जैमिनीयन्या. मात्वाक्षरपाठः ।

गात् ॥ १३ ॥ प्रकृत्यनुपरोधाच्च ॥ १४ ॥ उत्तरस्य वा मंत्रार्थित्वात् ॥ १५ ॥ विध्यतिदेशात्प्रकृतौ विकारः स्याद्गुणानामुपदेश्यत्वात् ॥ १६ ॥ पूर्वस्मिंश्चामन्त्रदर्शनात् ॥ १७ ॥

२ चातुर्मास्येषु सोमेष्वासादनानियोजनयोः प्राकृतगुणविधित्वाधिकरणम् २ ॥

संस्कारे तु क्रियांतरं तस्य विधायकत्वात् ॥ १८ ॥ प्रकृत्यनुपरोधाच्च ॥ १९ ॥ विधेस्तु यत्र भावात्सन्देहे यस्य शब्दस्तदर्थं स्यात् ॥ २० ॥ संस्कारसामर्थ्याद्गुणसंयो-

गाच्च ॥ २१ ॥ विप्रतिषेधात्क्रियाप्रकरणे स्यात् ॥२२ ॥

२ अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम्—४ ॥

षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥ अभ्यासात्तु प्रधानस्य ॥ २४ ॥आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥ अपि वा प्रतिमन्त्रत्वात्प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥२६॥ पौर्वापर्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥२७॥ तत्पृथक्त्वं च द-

शंयति ॥२८॥ न वाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥

२ पुनराधानेऽन्याधानदक्षिणानां निवृत्त्यधिकरणम्—८ ॥

अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥ शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥ विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥ शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥३३ ॥

२ वासोवत्साभ्यामन्वाहार्यस्याग्रयणे निवृत्त्यधिकरणम्—९ ॥

वासो वत्सञ्च सामान्यात् ॥३४ ॥

१ वासोवत्सयोराग्रयणेन्वाहार्यधर्मानुष्ठानाधिकरणम्-७ ॥

**अर्थापत्तेस्तद्धर्मः स्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥**

१ आग्रयणे वत्से पाकाभावाधि०-८ ॥

**दाने पाकोऽर्थलक्षणः ॥ ३६ ॥**

१ आग्रयणे वाससि पाकाभावाधि०-९ ॥

**पाकस्य चान्नकारित्वात् ॥ ३७ ॥**

१ आग्रयणे वासोवत्सयोरभिधारणाभावाधिकरणम्-१० ॥

**तथाभिधारणस्य ॥ ३८ ॥**

६ ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम्-११ ॥

[1]द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥ समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥ यस्य वा सन्निधाने स्याद्वाक्यतो ह्यभिसम्बन्धः ॥ ४१ ॥ असंयुक्तास्तु तुल्यवदितराभिर्विधीयन्ते तस्मात्सर्वाधिकारः स्यात् ॥ ४२ ॥ असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्याकोपात्क्रतोः ॥ ४३ ॥ शब्दार्थश्चापि लोकवत् ॥ ४४ ॥

---

१ द्रव्याविधीति सूत्रमारभ्य लिङ्गदर्शनाच्चेत्यन्तमेकमधिकरणं जै०न्या० मालानुसाराद्भवति ।

॰ तस्य द्वादशशतामित्यनेनसंख्याभिधा-नाधिकरणम्— १२ ॥

सां पशूनामुत्पत्तितो विभागात् ४५ ॥

॰ पशुषु गवां दक्षिणानियमाधि॰— १३ ॥

अनियमोऽविशेषात् ॥४६॥ भागित्वाद्वा गवां स्यात् ॥ ४७ ॥ प्रत्ययात् ॥ ४८ ॥ लिंङ्गदर्शनाच्च ॥४९॥

२ विभज्य गोदक्षिणाया दानाधि॰—१४॥

तंत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥ परिक्रयाच्च लोक

१ इदमधिकरणद्वयं शाबरभाष्यरीत्या। शास्त्रदी॰न्यायमा॰ स्त्वेकमेव ३९–४९ सूत्रादि सूत्रान्तम्। तत्रेत्यत्र तस्येति जै॰ न्या॰ मा॰ संमतः पाठः।

वत् ॥ ५१ ॥ विभागं चापि दर्शयति ॥ ५२ ॥

१ समाख्यानुसारेण ज्योतिष्टोमे दक्षिणाविभागाधिकरणम्—१५ ॥

समं स्यादश्रुतित्वात् ॥ ५३ ॥ अपि वा कर्मवैषम्यात् ॥ ५४ ॥ अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाभ्युदये ॥५५ ॥

१ भूनाम्नि धेनुदानेन दक्षिणाविभागाधिकरणम्— १६ ॥

तस्य धेनुरिति गवां प्रकृतौ वि-

भक्तं चोदितत्वात्तत्सामान्यात्तद्वि-
कारः स्यादर्थाद्गुणशब्देन ॥ ५६ ॥
सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षि-
णार्थस्य गुणानां कार्य्यैकत्वादर्थे वि-
कृतौ श्रुतिभूतं स्यात्तया समवाया-
द्धि कर्मभिः ॥ ५७ ॥ चोदनानाम-
नाश्रयाल्लिंगेन नियमः स्यात् ॥५८॥

१ एका गामित्यनेन प्राकृतसंख्याबाधा-
धिकरणम्—१७ ॥

एंका पश्वेति धेनुवत् ॥ ५९ ॥

---

१ तस्मात्सेति जै० न्या० ला० संमतः पाठः।
२ एका पेति जै० न्या० ला० संमतः पाठः।

१ साद्यस्के त्रिवत्सेन सोमक्रयसाधनमान-बाधाधिकरणम्—१८ ॥

त्रिवत्सश्च ॥ ६० ॥ तथा लिंगदर्शनम् ॥ ६१ ॥ एके तु श्रुतिभूतत्वात्सङ्ख्याया गवां लिंगविशेषेण ॥ ६२ ॥

१ अश्वमेधे प्राकाशावित्यनेनाध्वर्युभागबाधाधिकरणम्—१९ ॥

प्राकाशौ च[2] तथेति चेत् ॥६३॥ अपि त्ववयवार्थत्वाद्विभक्तप्रकृति-

२ तथा चेति चशब्दोधिकः जै० न्या० लाकून्मते पाठः।

२ चशब्दोधिको वृत्तिकृन्मते ।

त्वाद्गुणेदन्ताविकारः स्यात् ॥ ६४ ॥

१ उपहव्ये श्यावाश्वेनाखिलदक्षिणाबाधाधिकरणम्—२० ॥

धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥ एके तु कर्तृसंयोगात्स्रग्वत्तस्य लिंगविशेषेण ॥ ६६ ॥ अपिवा तदधिकाराद्धिरण्यवद्विकारः स्यात् ६७

४ ऋतपेये सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम्—२१ ॥

तथा च सोमचमसः ॥ ६८ ॥ सर्वविकारो वा क्रत्वर्थे पशूनां प्रतिषे-

१ र्थे प्रतिषेधात्पशूनामिति जे॰न्या॰व्याख्यासंमतःपाठः ।

धात् ॥ ६९ ॥ अन्नदानेऽविशिष्ट-
मिति चेत् ॥ ७० ॥ उत्सर्गस्य क्र-
त्वर्थत्वात्प्रतिषिद्धस्य कर्मत्वान्न च
गौणः प्रयोजनमर्थः स दक्षिणानां
स्यात् ॥ ७१ ॥ यदि तु अन्नस्तद्रू-
नं तद्विकारः स्यात् ॥ ७२ ॥ सर्वं
वा पुरुषापनयात्तासां क्रतुप्रधानत्वा-
त् ॥ ७३ ॥
१ वाजपेये रथस्य भागनियामकताधि ७-२२॥
यजुर्युक्तोऽध्वर्य्योर्दक्षिणा विकारः
स्यात् ॥ ७४ ॥ अपि वा श्रुतिभू-

२ मंस्याप्नोति जै० न्या० मा० संमतः पाठः ।

**तत्वात्सर्वासां तस्य भागो नियम्यते ॥ ७९ ॥ ( २२ ) ॥ ३३ ॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने दशमस्याध्यायस्य ( बाधकरणं कार्यैकत्वं नाम ) तृतीयः पादः ॥ १० ॥ ३ ॥

---

१ नारिष्टहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम्- १ ॥

**प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥**

२+२ वाजपेये शरमयबर्हिषा कौशबर्हिषो बाधः१-रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोर्बाधः २-इति वर्णकद्वययुक्तमाधि०- २ ॥

**चोदनालिङ्गसंयोगे तद्विकारः प्रती-**

येत प्रकृतिसन्निधानात् ॥ २ ॥

१ बार्हस्पत्यग्रहादिभिः प्राकृतेन्द्रवायवा-
दिग्रहाणां समुच्चयाधि०—३ ॥

सर्वत्र तु ग्रहाम्नातमाधिकं स्यात्प्र-
कृतिवत् ॥ ३ ॥ अधिकश्चैकवाक्य-
त्वात् ॥ ४ ॥ लिंगदर्शनाच्च ॥ ५ ॥

२ वाजपेये प्राजापत्यपशुभिः क्रतुपशूना
समुच्चयाधिकरणम्—४ ॥

प्राजापत्येषु चाम्नानात् ॥ ६ ॥

१ सांग्रहिणीष्टावामनहोमैरनुयाजानां समु॰
च्चयाधि— ५ ॥

आमने लिंगदर्शनात् ॥ ७ ॥

१ प्रथमं द्वितीयं चेति सूत्रद्वयं मिलित्वैकमधिकरणं प्रथममेवेति वृत्तौ शास्त्रदीपिकायां च ।

२ पत्न्युपगाने नर्त्विगुपगानस्य महाव्रते समुच्चयाधिकरणम्— ६ ॥

**उपगेषु शरवत्स्यात्प्रतिलिंगसंयोगात् ॥ ८ ॥ आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥**

१ अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिःसमुच्चयाधि०७ ॥

**संस्कारे चान्यसंयोगात् ॥ १० ॥ प्रयाजवदिति चेन्नार्थान्यत्वात् ॥ ११ ॥**

१ अहतवाससस्तार्प्यादिभिर्महाव्रते समुच्चयाधिकरणम्— ८ ॥

**आच्छादने त्वैकार्थ्यात्प्राकृतस्य**

---

१ दिति चेदित्यन्तमंके, तत उत्तरमेकमिति सूत्रद्वयमिति जै० न्या० मा० मते ।

विकारः स्यात् ॥ १२ ॥ आधिक्यं वा-न्यार्थत्वात् ॥ १३॥ समुच्चयं च दर्श-यति ॥ १४ ॥

१ महाव्रते रथन्तरादिसाम्नां श्लोकादिसा-मभिः समुच्चयाधिकरणम्—९ ॥

सामस्वर्थान्तरश्रुतेरविकारः प्रती-येत ॥ १५ ॥

१ विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभि-र्बाधाधिकरणम्—१० ॥

---

१ इदं सूत्रं वृत्तिकृन्मते नास्ति । भाष्ये जै० न्यायमा० लाकृन्मते चास्ति ।

२ उत्तरसूत्रेण सहैकमधिकरणं तथा पृथगुत्तरसूत्रमात्रं पुनः पठित्वाऽधिकरणान्तरमिति जै० न्या०मालाकृन्मते शास्त्रदीपिकाकृन्मते तूत्तरसूत्रं पूर्वाधिकरणस्यैव वर्णका-न्तरं द्रष्टव्यम् ।

अर्थैत्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १६ ॥

१ कौत्सादिभिर्व्यवस्थयैकादिबाधाधिकरणम्–११ ॥

सर्वेषामविशेषात् ॥ १७ ॥ एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ॥ १८ ॥

१ विवृद्धाविवृद्धस्तोमक्रतुषु क्रमेण प्राकृतसामबाधाबाधाधिकरणम्–१२ ॥

स्तोमविवृद्धौ त्वाधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वात् ॥ १९ ॥

१ पवमाने विवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणम्—१३ ॥

पावमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ २० ॥ वचनानि त्वपूर्वत्वात् ॥ २१ ॥

१ यागादौ विधिशब्देनैव देवताभिधानाधिकरणम्—१४ ॥

विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ २२ ॥ शेषाणां वा चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते ॥ २३ ॥

अतिदेशस्थलेपि वैधशब्देनैव देवताभिधानाधिकरणम्—१५ ॥

तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २४

१ आधानेऽग्नेःसगुणेनाभिधानाधि०—१६॥

प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥२५॥ अविकारो वाऽर्थशब्दानपायात्स्याद्द्रव्यवत् ॥ २६ ॥ आरं[1]म्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् ॥२७॥ द्रव्येष्वारम्भगामित्वादर्थे विका[2]रःसामर्थ्यात् ॥ २८ ॥

---

१ तथोरिति जै० न्या० ला० संमतः पाठः ।
२ कार्ये इति वृत्तिकारसम्मतः पाठः ।

१ आधानाज्ययोरग्नेर्निर्गुणेनाभिधानाधिकरणम्— १७ ॥

बुधन्वान्पवमानवद्विशेषानिर्देशात् ॥ २९ ॥ मन्त्रविशेषानिर्देशान्न देवताविकारः स्यात् ॥ ३० ॥

२ गवानुबन्धपृषदाज्यहोमयोर्विधिशब्दाभ्यामेवोस्रावनस्पतिशब्दाभ्यामभिधानाधिकरणम्— १८ ॥

विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपिभेदः स्यात् ॥ ३१ ॥ यथोक्तं वा विप्रतिपत्तेर्न चोदना ३२ ॥

---

१ बुधेति जैमिनीयन्यायमालाकृतः शाबरभाष्यकृतः शास्त्रदीपिकाकृतश्च सम्मतः पाठः ।

२ अवभृथेऽग्नीवरुणयोः सस्विष्टकृच्छब्देनाभिधानाधिकरणम्— १९ ॥

स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३३ ॥ संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३४ ॥

१ अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणाग्निशब्देनाग्नेरभिधानाधिकरणम्—२० ॥

सगुणस्य गुणलोपे निगमेषु गुणा[1]स्थाने यावदुक्तं स्यात् ॥३५ ॥ सर्वस्य वैककर्म्यात् ॥ ३६ ॥

---

१ गुणस्थाने इति पदं वृत्तिकृन्मते एवाधिकम् ।

२ अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्म-
ताधिकरणम्—२१ ॥

स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३७॥

१ दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः
संस्कारकर्मताधिकरणम्—२२ ॥

अन्वाहेति च शस्त्रवत्कर्म स्याच्चोदनान्तरात् ॥ ३८ ॥ संस्कारो वा चोदितस्य शब्दस्य वचनार्थत्वात् ॥३९॥ अवाच्यत्वान्नेति चेत्॥४०॥ स्याद्गुणार्थत्वात् ॥ ४१ ॥

२ मनोतायामूहाभावाधिकरणम्—२३ ॥

---

१ इदं सूत्रमधिकं वृत्तिकृन्मते ।

मनोतायां तु वचनादविकारः स्यात् ॥ ४२ ॥

२ कण्वरथन्तरस्य स्वयोनौ गानाधि—२४॥

पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वादृचां प्रविभक्तत्वात् ॥ ४३॥ स्वयोनौ वा सर्वाख्यत्वात् ॥ ४४ ॥ यूपवदिति चेत् ॥ ४५ ॥ न कर्मसंयोगात् ॥ ४६ ॥

१कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधि० २५

कार्य्यत्वादुत्तरयोर्यथाप्रकृति ४७ समानदेवते वा तृचस्य विभागात् ४८

२ त्वामिद्धि हवामह इति जै. न्या. सम्मतः पाठः

१ अग्निष्टुति स्तुतशस्त्रयोरविकाराधि० २६॥

ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ४९ ॥

२ चातुर्मास्येष्वाज्यशब्दस्य विकारेणावाहनाधिकरणम्—२७ ॥

उभयपानात्पृषदाज्ये दध्नोप्युपलक्षणं निगमेषु पातव्यस्योपलक्षणत्वात् ५०

न वा परार्थत्वाद्यज्ञपतिवत् ॥ ५१ ॥

स्याद्वा आवाहनस्य तादर्थ्यात्॥५२॥

न वा संस्कार शब्दत्वात् ॥ ५३ ॥

स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥

---

१ क्षणादीति न्या० मा० मते पाठः ।

दध्नस्तु गुणभूतत्वादाज्यपानिगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ५५॥ दधि वा स्यात्प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५६ ॥ अपिवाज्यप्रधानत्वाद्गुणार्थे व्यपदेशोभक्त्या संस्कारशब्दः स्यात् ॥५७॥ अपि वाख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥५८ न वा स्याद्गुणशास्त्रत्वात् ॥ ५९ ॥ ( २७ ) ॥ ४२ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने दशमस्याध्यायस्य ( नक्षत्रेष्टिविहितोपहोमानां चोदकप्राप्तनारिष्ठहोमैः सह समुच्चयो नाम ) चतुर्थः पादः ॥ १० ॥ ४ ॥

१ एकदेशग्रहणे प्राथमिकानामेव ग्रहणा-
धिकरणम्- १९ ॥

आनुपूर्व्यवतामेकदेशग्रहणेष्वागम वदन्त्यलोपः स्यात् ॥ १ ॥ लिंगदर्शनाच्च ॥ २ ॥ विकल्पो वा समत्वात् ॥ ३ ॥ क्रमादुपसर्जनोऽन्ते स्यात् ॥ ४ ॥ लिंगमविशिष्टं सङ्ख्याया हि तद्वचनम् ॥ ५ ॥ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥

१ एकत्रिके आद्ये तृचे गानाधि-०२ ॥

एकत्रिके तृचादिषु माध्यंदिने-

---

१ द्विके छन्देति जै० न्या० मा० संमतः पाठः ।

छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥ आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ॥ ८ ॥ यथानिवेशश्च प्रकृतिवत्सङ्ख्यामात्रविकारत्वात् ॥ ९ ॥

१ एकस्यामृचि धूर्गानाधिकरणम्—३ ॥

त्रिकस्तृचे धुर्य्ये स्यात् १०॥एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ११॥

२ द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम्—४ ॥

चोदनासु त्वपूर्वत्वाल्लिंगेन धर्मनियमः स्यात् ॥ १२ ॥ प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ॥ १३ ॥

२ अग्नौ न्यूननाधार्थानां मन्त्राणामनियमे-
नोपादानाधिकरणम्—५ ॥

अपूर्वासु तु संख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात् ॥ १४ ॥

१ विवृद्धस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणम्—६ ॥

स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमविकारात्सङ्ख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥ आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥ सङ्ख्यायाश्च पृथक्त्वे निवेशात् ॥ १७ ॥ पराक्छन्द-

त्वात् ॥१८॥उक्ताविकाराच्च ॥१९॥ अश्रुतित्वादिति चेत्॥२०॥ स्यादर्थं चोदितानां परिमाणशास्त्रम्२१आवाप वनचं वा[1]भ्यासे नोपपद्यते॥२२॥साम्ना चोत्पत्तिसामर्थ्यात् ॥ २३ ॥ धुर्येष्वपीति चेत् ॥ २४ ॥ नावृत्तिधर्मत्वात् ॥ २५ ॥

१ बहिष्पवमाने ऋगागमाधि०—७ ॥

बहिष्पवमाने तु ऋगागमः सामैकत्वात् ॥ २६ ॥

---

१ नं चेति जै० न्या० ला० संमतः पाठः ।

३ सामिधेनीष्ववशिष्टानामागमेन संख्या-
पूरणाधिकरणम्—८ ॥

अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २७ ॥ अविशेषान्नेति चेत् ॥ २८ ॥ स्यात्तद्धर्मत्वात् प्रकृतिवदभ्यस्येताऽऽसङ्ख्यापूरणात् ॥ २९ ॥ यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ अधिकानाञ्च दर्शनात् ॥ ३१ ॥ कर्मस्वपीति चेत् ॥ ३२ ॥ न चोदितत्वात् ॥ ३३ ॥

१ न कर्मेति जै० न्या० मा० सम्मतः पाठः ।

१ षोडशिनां प्राकृतत्वाधिकरणम्-९ ॥

षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥ प्रकृतौ चाऽभावदर्शनात् ॥ ३५ ॥ अयज्ञवचनाच्च ॥ ॥३६॥ प्रकृतौ वा शिष्टत्वात्॥३७॥ प्रकृतिदर्शनाच्च ॥ ३८ ॥ आम्नानं परिसंख्यार्थम् ॥३९॥ उक्तमभावदर्शनम्॥४०॥गुणादयज्ञत्वम् ॥ ४१ ॥

१ आग्रयणादेव षोडशिग्रहणाधि०-१०॥

तस्याग्रयणाद्ग्रहणम् ॥ ४२ ॥ उक्थ्याच्च वचनात् ॥ ४३ ॥

---

१ म्नातं पेति जै० न्या० ला० संमतः पाठः ।

१ तृतीयसवन एव षोडशिग्रहणाधि०—११

तृतीयसवने वचनात्स्यात् ॥४४॥ अनभ्यासे पराक्छन्दस्य तादर्थ्यात् ॥ ४५ ॥ उक्थ्यविच्छेदवचनाच्च[1] ॥ ॥ ४६ ॥ आग्रयणाद्वा पराक्छन्दस्य देशवाचित्वात्पुनराधेयवत् ॥ ४७ ॥ विच्छेदः स्तोमसामान्यात् ॥४८ ॥

षोडशिग्रहस्य सस्तोत्रशस्त्रताधि०—१२॥

उक्थ्याऽग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति संस्थान्यत्वम् ॥४९ ॥ सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥

---

१ चनत्वादिति चशब्दशून्यः पाठो जै० न्या० मा० संमतः ।

लिङ्गदर्शनाच्च ॥५१॥ वचनात्संख्या-न्यत्वम् ॥ ५२ ॥

२+१ अङ्गिरसां द्विरात्रे षोडशिनः परि-सङ्ख्याधिकरणम्—१३ ॥

अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥
अन्वयो वानारभ्य विधानात् ॥५४॥

२ नानाहीने षोडशिग्रहग्रहणाधि०१४ ॥

चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत्५५॥ अपि वा सङ्ख्यावत्त्वान्नाहीनेषु गृह्यते पक्षवदेकस्मिन्त्संख्यार्थभावात ॥५६। भोजने च[1] तत्सङ्ख्यं स्यात् ॥ ५७ ॥

---

१ चशब्दो नास्ति जैमि० न्या० मा० मते ।

१+२ ग्रहाणामाग्रयणाग्रतासाधकत्वमि-ति--जगत्साम्नो जगत्पृथगुत्पन्नसामताकत्व-मिति च वर्णकद्वयात्मकमधिकरणम्--१५ ॥

**जगत्साम्नि सामाभावादृक्ः साम तदाख्यं स्यात् ॥ ५८ ॥**

२ गोसवे उपवत्यग्रवत्योरभावाधि०१६ ॥

**उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥ ५९ ॥ मुख्येन वा नियम्यते ॥ ६० ॥ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥**

१ ऐन्द्रवायवस्यासर्वादावातिकर्षाधि०--१७॥

**ऐन्द्रावायवस्याग्रवचनादादितः प्रतिकर्षः स्यात्॥६२॥ अपि वा ध-**

**र्मविशेषात्तद्धर्माणां स्वस्थाने प्रतिकर्षणादग्रत्वमुच्यते ॥ ६३ ॥ धारासंयोगाच्च ॥ ६४ ॥**

१ कामसंयोगैप्यैन्द्रवायवस्यादावप्रतिकर्षाधिकरणम्—१८ ॥

**कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ ६५ ॥ तद्देशानां वाऽग्रसंयोगात्तद्युक्ते[1] कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥**

२ आश्विनाग्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम्—१९ ॥

---

१ युक्ते इति जै० न्या० ला० सम्मतः पाठः ।

परेषु वाग्रशब्दः पूर्ववत्स्यात्त-
दादिषु ॥ ६७ ॥ प्रतिकर्षो वा नि-
त्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥
प्रतिकर्षञ्च दर्शयति ॥ ६९ ॥

२ आश्विनादीनां ग्रहाणामैन्द्रवायवस्य
पुरस्तात्प्रतिकर्षाधिकरणम्—२० ॥

पुरस्तादैन्द्रवायवादग्रस्य कृतदेश-
त्वात् ॥७०॥ तुल्यधर्मत्वाच्च ॥७१॥
तथा च लिङ्गदर्शनम् ॥ ७२ ॥

---

( १ ) षु चाग्रेति जै॰ न्या॰मा॰ पाठः ।
२ त्वाग्रस्येति क्वचित्पाठः ।
३ वयस्यामिति जै॰ न्या॰ का॰ संमतः पाठः ।

१ सादनस्यापि प्रतिकर्षाधिकरणम्—२१॥

सादनं चापि शेषत्वात् ॥ ७३ ॥
लिङ्गदर्शनाच्च ॥ ७४ ॥

१ प्रदानस्याप्रतिकर्षाधिकरणम्— २२ ॥

प्रदानं चापि सादनवत् ॥७५॥ न वा प्रधानत्वाच्छेषत्वात्सादनं तथा ७६

१ त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम्—२३ ॥

त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥ अपि वाऽहर्गणेष्वग्निवत्समानं विधानं स्यात् ७८

---

२ मान्बीति जै० न्या० ला० संमतः पाठः ।

१ व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम्—२४ ॥

द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥७९॥ व्यूढो वा लिंगदर्शनात्समूढविकारः स्यात् ॥ ८० ॥ कामसंयोगात् ॥ ८१ ॥ तस्योभयथा प्रवृत्तिरैककर्म्यात् ८२॥

१ संवत्सरसत्रेनीकानां विवृद्ध्यधि०—२५॥

एकादशिनीवत्त्र्यनीका प्रवृत्तिः[2] स्यात् ॥ ८३ ॥ हवस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ८४ ॥ पृ-

१ जै० न्या० स्यादिति नास्ति ।

२ शिवनवत्र्यनीका परिवृत्तिरिति जै०न्या०मा०पाठ० ।

ष्ट्यावृत्तौ चाग्रयणस्य दर्शनात्त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥ वचनात्परिवृत्तिरैकादशिनेषु ॥ ८६ ॥ लिंगदर्शनाच्च ॥ ८७ ॥

१ व्यूढेमन्त्राणां छन्दोव्यतिक्रमाधि०—२६॥

छन्दोव्यतिक्रमाद्व्यूढे भक्षपवमानपरिधिकपालमन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात्॥८८॥(२६) ॥४२॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांदर्शने दशमस्याध्यायस्य ( बाधप्रसङ्गागतग्रहादिविचारो नाम ) पञ्चमः पादः ॥ १० ॥ ५ ॥

१ रथन्तरादीनां साम्नां तृचे गानाधि०—१

**एकर्क्स्थानानि यज्ञे स्युः स्वाध्या-यवत्॥१॥तृचे वा लिंगदर्शनात्॥२॥**

१ स्वर्दृक्छब्देन वीक्षणस्य कालार्थताधि-करणम्— २ ॥

**स्वर्दृशं प्रति वीक्षणं कालमात्र-परार्थत्वात् ॥ ३ ॥**

१ गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयो-र्विभागाधि०— ३ ॥

**पृष्ठ्यस्य युगपद्विधेरेकाहवद्द्विसा-मत्वम् ॥ ४ ॥ विभक्ते वा समस्तवि-धानात्तद्विभागेऽप्रतिषिद्धम् ॥ ५ ॥**

१ प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणम्- ४ ॥

समासस्त्वेकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥ विहारप्रतिषेधाच्च ॥७॥ श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥ विहारप्रकृतित्वाच्च ॥ ९ ॥ यावच्छक्यं तावद्विहारस्यानुग्रहीतव्यं विशये च तदासत्तिः ॥ १० ॥ त्रय स्तथेति चेत् ॥ ११ ॥ न समत्वात्प्रयाजवत् ॥ १२ ॥

१ सर्वपृष्ठे देशविशेषव्यवस्थाधिकरणम्-५॥

सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदे-

शत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥
विधेस्तु विप्रकर्षः स्यात् ॥ १४ ॥

१ वैरूपवैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणम्—६ ॥

वैरूपसामा क्रतुसंयोगात्रिवृद्धदेकसामा स्यात् ॥ १५ ॥ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १६ ॥ त्रिवृद्धिति चेत् ॥ १७ ॥ न प्राकृतापवृत्तसंयोगात् ॥ १८ ॥ विधित्वान्नेति चेत् ॥ १९ ॥ न स्याद्विशये तन्न्यायत्वात्कर्माविभागात् ॥ २० ॥ प्रकृतेश्चाविकारात् ॥ २१ ॥

१ त्रिवृति स्तोमगतसंख्याविकाराधि०—७॥

त्रिवृति सङ्ख्यात्वेन सर्वसङ्ख्याविकारः स्यात् ॥२२॥ स्तोमस्य वा तल्लिंगत्वात् ॥ २३ ॥

२ उभयसाम्नि बृहद्रथन्तरयोः समुच्चयाधिकरणम्—८ ॥

उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥२४॥ पृष्ठार्थे वाऽतदर्थत्वात् ॥ २५ ॥ लिंगदर्शनाच्च ॥ २६ ॥

१ मध्वशनघृताशनयोः षडहान्तेनुष्ठानाधिकरणम्— ९ ॥

पृष्ठे रसभोजनमावृत्ते संस्थिते त्र-

यश्चिंशेऽहनि स्यात्तदानन्तर्य्यात्प्रकृतिवत् ॥ २७ ॥ अन्ते वा कृतकालत्वात् ॥ २८ ॥

१ षडहावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानाधिकरणम्—१० ॥

अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २९ ॥ अन्ते वा कृतकालत्वात् ॥ ३० ॥

१ गवामयने मध्वशनघृताशनयोः प्रतिमासमावृत्त्यधिकरणम्—११ ॥

आवृत्तिस्तु व्यवाये कालभेदात् ॥ ३१ ॥ ॥

१ द्वादशाहे सत्रिभिरपि मध्वशनाधि०—१२॥

मधु न दीक्षिता ब्रह्मचारित्वात् ॥३२॥प्राश्येतवायज्ञार्थत्वात्॥३३॥

१ मानसस्य द्वादशाहाङ्गताधिकरणम्—१३॥

मानसमहरन्तरं स्याद्द्वादशाहे व्यपदेशात् ॥ ३४ ॥ तेन च संस्तवात् ॥ ३५ ॥ अहरन्ताच्च परेण चोदना ॥ ३६ ॥ पक्षे सङ्ख्या सहस्रवत् ॥ ३७ ॥ अहरंगवांशुवच्चोदनाभावात् ॥ ३८ ॥ दशमविसर्गवचनाच्च ॥ ३९ ॥ दशमेऽहनीति च तद्गुण-

१ स्याद्वेदेन व्देयोती जै० न्या० ला० सं मतः पाठः ।

शाखात् ॥ ४० ॥ सङ्ख्यासामञ्ज- स्यात् ॥ ४१ ॥ पश्चातिरेके चैकस्य भावात् ॥ ४२ ॥ स्तुतिव्यपदेशमंगेन विप्रातिषिद्धं व्रतवत् ॥ ४३ ॥ वचना- नतान्तत्वम् ॥ ४४ ॥

१ सत्रस्य बहुकर्तृकत्वाधिकरणम्—१४ ॥

सत्रमेकः प्रकृतिवत् ॥४५॥ बहु- वचनात्तु बहूनां स्यात् ॥ ४६ ॥ अप- देशः स्यादिति चेत् ॥ ४७ ॥ नैकव्य- पदेशात् ॥ ४८ ॥ सन्निवापं च दर्श-

१ बहुवेत्यत्र बहुशब्दरहितः पाठो जै० न्या० ला० संमतः ।

यति ॥ ४९ ॥ बहूनामिति चैकस्मि-
न्विशेषवचने व्यर्थम् ॥ ५० ॥

१ सत्रे यजमानानामेव ऋत्विक्त्वाधिकर-
णम्- १९॥

अन्ये स्युर्ऋत्विजःप्रकृतिवत् ५१॥
अपि वा यजमानाः स्युर्ऋत्विजाम-
भिधानसंयोगात्तेषां स्याद्यजमानत्व-
म् ॥ ५२ ॥ कर्तृसंस्कारो वचनादा-
धातृवदिति चेत् ॥ ५३ ॥ स्याद्वि-
शये तन्न्यायत्वात्प्रकृतिवत् ॥ ५४ ॥
स्वाम्याख्याः स्युर्गृहपतिवदिति चे-

१ चानं केथेति जै० न्या० सम्मतः पाठः ।

त् ॥ ५५॥ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥ बहूनामिति तुल्येषु विशेषवचनं नोपपद्यते ॥५७॥ दीक्षिताऽदीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् ॥५८॥ अदक्षिणत्वाच्च ॥ ५९ ॥

१ सत्राहीनयोर्विवेकाधिकरणम्—१६ ॥

द्वादशाहस्य सत्रत्वमासनोपेयिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ६० ॥ यजातिचोदना.

---

१ इदं सूत्रमधिकं प्रतिभासते ।

दहीनत्वं स्वामिनां चाऽस्थितपरिमा-
णत्वात्॥ ६१ ॥

१ पौण्डरीके सकृदेव दक्षिणादानाधिकर-
णम्- १७ ॥

अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं
कर्मभेदः स्यात् ॥ ६२ ॥ सर्वस्य वैकक-
र्म्यात् ॥ ६३ ॥ पृषदाज्यवद्वाऽह्नां गुण-
शास्त्रं स्यात् ॥ ६४ ॥ ज्योतिष्टोम्यस्तु
दक्षिणाः सर्वासामेककर्मत्वात्प्रकृतिव-
त्तस्मात्तासां विकारः स्यात् ॥ ६५ ॥
द्वादशाहे तु वचनात्प्रत्यहं दक्षिणाभे-
दस्तत्प्रकृतित्वात्परेषु तासां विकारः

स्यात् ॥ ६६ ॥ परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ॥ ६७ ॥ भेदस्तु गुणसंयोगात् ॥ ६८ ॥

२ पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम्—१८ ॥

प्रत्यहं सर्वसंस्कारःप्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥६९॥ एकार्थत्वान्नेति चेत् ॥ ७० ॥ उत्पत्तौ कालभेदात् ॥ ७१ ॥ विभज्य तु संस्कारवचनाद्द्वादशाहवत् ॥ ७२ ॥

---

१ स्याद्रूपेति जै० न्या० संमतः पाठः ।

१ मानवीषु पञ्चदशानामेव सामिधेनीवि-
धिकरणम्-१९ ॥

लिंगेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिंगस्य सर्वगामित्वात् ॥ ७३ ॥ यावदर्थं वीऽर्थे शेषत्वादतोऽर्थेन परिमाणं स्यात्तस्मिंश्च लिंगसामर्थ्यम् ॥७४॥ आग्नेये कृत्स्नविधिः ॥७५॥ ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ॥ ७६ ॥

१ वाससि मानोपावहरणयोरनुष्ठानाधिकर-
णम्-२० ॥

वाससि मानोपावहरणौ प्रकृतौ सोमस्य वचनात् ॥ ७७ ॥

१ अहर्गणे वासोन्तरोत्पादनाधि०—२१ ॥

तत्राहर्गणेऽर्थाद्वासःप्रकृतिःस्यात् ७८।

१ उपावहरणार्थमेव वासोन्तरोत्पादनाधिकरणम्—२२ ॥

मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७९ ॥ हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥८०॥ (२२) ॥ २७ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने दशमस्याध्यायस्य(बाधप्रसङ्गागतसामविचारो नाम)षष्ठः पादः॥ १०॥६॥

---

१ ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम्—१

पशावेकहविष्ट्वं समस्तचोदितत्वा-

त् ॥ १ ॥ प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्कल्पनत्वात् ॥ २ ॥

२ पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागविशेषा-
नुष्ठानाधिकरणम्--२ ॥

हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ आज्यभागवद्वा निर्देशात्परिसंख्या स्यात् ॥ ४ ॥ तेषां वा व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पञ्चावदानत्वात् ॥ ५ ॥ अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्याने ऽनर्थकः स्यादवदानत्वात्तेषां निरवदानप्रतिषेधः

स्यात् ॥ ६ ॥ अपि वा परिसंख्या स्यादवदीयशब्दत्वात् ॥ ७ ॥ अब्राह्मणे च दर्शनात् ॥ ८ ॥ श्रुताश्रुतोपदेशाच्च तेषामुत्सर्गवद्यज्ञशेषत्वं सर्वेषां श्रपणं स्यात् ॥ ९ ॥

१ ज्योतिष्टोमेऽनिड्याशेषैर्यज्ञैः स्विष्टकृद्धोमाधिकरणम्—२ ॥

इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥ त्र्यंगैर्वा शरवद्विकारः स्यात् ॥ ११ ॥

---

१ न श्रपणं स्यादिति जै० न्या० शाङ्करमते नास्ति ।

२ अध्वर्य्वा इडाभक्षविकारताधिकरणम् ४ ॥

अध्वर्यु होतुस्त्र्यङ्गवादिडाभविकारः स्यात् ॥ १२ ॥ शेषे वा समवैति तस्माद्रथवान्नियमः स्यात् ॥ १३ ॥ अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥ अपि वा दानमात्रं स्याद्भक्षशब्दानभिसम्बन्धात् ॥ १५ ॥ दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्याविशिष्टत्वात् ॥ १६ ॥

२ वनीष्ठोर्भक्षविकारताधिकरणम्–५ ॥

अग्नीधश्च वनिष्ठरध्वर्युवत् ॥ १७ ॥

---

१ भी त्विति पुस्तकद्वोधिको जै० न्या० नमते ।

१ मैत्रावरुणस्यापि शेषभक्षास्तितत्त्वाधिकरणम्—६ ॥

अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥ स्याद्वा होत्रध्वर्युविकारत्वात्तयोःकर्माभिसम्बन्धात् १९

१ मैत्रावरुणस्यैकभागताधिकरणम्—७ ॥

द्विभागः स्याद्द्विकर्मत्वात् ॥२०॥ एकत्वाद्वैकभागः स्याद्भागस्याश्रुतिभूतत्वात् ॥ २१ ॥

१ प्रतिप्रस्थातुर्भक्षाभावाधिकरणम्—८ ॥

प्रतिप्रस्थातुश्च वपाश्रपणात् ॥२२॥ अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥

## ७ गृहमेधीयकेऽपूर्वाज्यभागविधानाधिकरणम्—९ ॥

विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थकं[1] स्यात् ॥ २४ ॥ अपि वाऽऽग्नेयवद्विशब्दत्वं स्यात् ॥ २५ ॥ न वा शब्दपृथक्त्वात् २६ ॥ अधिकं वार्थवत्त्वात्स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ प्रतिषेधः

---

१ नार्थिका स्येति जै० न्या क्रुत्संमतः पाठः । नर्थकः स्येति वृत्तिपुस्तके मूले पाठः । वृत्त्यानुसारेण नर्थकं स्येति पाठः

स्यादिति चेत् ॥ २८ ॥ नाश्रुतत्वात् ॥२९॥ अग्रहणादिति चेत् ॥ ३० ॥ न तुल्यत्वात् ॥ ३१ ॥ तथा तद्ग्रहणे स्यात् ॥ ३२ ॥ अपूर्वतां तु दर्शये-द्ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥

१ गृहमेधीये स्विष्टकृताद्यनुष्ठानाधि० १०॥

ततोऽपि यावदुक्तं स्यात् ॥३४॥

१ गृ०--प्राशित्रादिभक्षणाभावाधि० ११ ॥

स्विष्टकृति भक्षप्रतिषेधः स्यात्तुल्य-कारणत्वात् ॥ ३५ ॥ अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३६ ॥ प्रति-षेधो वा विधिपूर्वस्य दर्शनात्॥३७॥

२ प्रायणीयातिथ्ययोः शंख्विडान्तताऽनियमाधिकरणम्-१२ ॥

**शंय्विडान्तत्वे विकल्पः स्यात्परेषुपत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् ॥ ३८ ॥ नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥ ३९ ॥**

२ प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंख्विडाभ्यां संस्थाधिकरणम् १३ ॥

**प्रतिषेधवच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥ ४० ॥ प्रतिषेधवा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ४१ ॥ प्रति**

---

१ षेधार्थवेति जै० न्या० कृत्संमतः पाठः ।

षेधस्य त्वरायुक्तत्वात्तस्य च नान्यदे-
शत्वम् ॥ ४२ ॥

२ उपसदामपूर्वार्थत्वाधिकरणम्—१४ ॥

उपसत्सु यावदुक्तमकर्म स्यात् ॥
॥ ४३ ॥ स्रौवेण वाऽगुणत्वाच्छेष-
प्रतिषेधः स्यात् ॥ ४४ ॥ अप्रति-
षेधो वा प्रतिषिध्यप्रतिप्रसववत् ४५॥
अनिज्या वा शेषस्य मुख्यदेवतानभी
ज्यत्वात् ॥ ४६ ॥

२अवभृथेऽ पूर्वकर्मताधिकरणम्—१५ ॥

अवभृथे बर्हिषः प्रतिषेधाच्छेषक-

---

१ स्यादिति जै० न्या० मा० सं० पाठः ।

मं स्यात् ॥ ४७ ॥ आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४८ ॥ प्रयाजानां त्वेकदेशप्रतिषेधवाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ॥ ४९ ॥ आज्यभागयोर्ग्रहणं नित्यानुवादो वा गृहमेधीयवत्स्यात् ॥ ५० ॥

१ वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम्–१६ ॥

विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् ॥ ५१ ॥ उभयप्रदेशादिति

१ शामितीति जै॰ न्या॰ मा॰ पाठः ।

चेत् ॥५२॥ शेषत्वंपीति चेत् ॥५३॥ विरोध्यग्रहणात्तथा शेषेष्विति चेत् ॥ ॥ ५४ ॥ तथेतरस्मिन्[1] ॥ ५५ ॥ श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥ ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् ॥ ५७ ॥

२ काम्येष्टिषु प्राकृतद्रव्यदैवतस्य निवृत्त्यधिकरणम्—१७ ॥

सर्वासाञ्च गुणानामर्थवत्त्वाद्ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥ अधिकं स्यादिति चेत् ॥५९॥ नार्थाभावात् ॥६०॥

---

१ तथोत्तरस्मिन्निति जै० न्या० संमतः पाठः ।

१ सोमापौष्णपशौ खादिरयूपस्य नियमाधिकरणम्—१८ ॥

तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात् ॥ ६१ ॥ यावच्छ्रुतीति चेत् ॥ ६२ ॥ न प्रकृतावशब्दत्वात् ॥ ६३ ॥

२ ब्रह्मवर्चसकामैर्व्रीहिभिरेव यागाधि०—१९॥

विकृतौ त्वनियमः स्यात्पृषदाज्यवद्ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद्गुणशास्त्रं यदेति स्यात् ॥ ॥ ६४ ॥ ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥ विरो-

धित्वाच्च ऊोकवत् ॥ ६६ ॥ क्रतोश्च तद्गुणत्वात् ॥ ६७ ॥ [1]विरोधिनाञ्च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात् ॥ ६८ ॥ पृषदाज्ये समुच्चयाद्ग्रहणस्य गुणार्थत्वम् ॥ ६९ ॥ [2]यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ७० ॥ क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् ॥ ७१ ॥

१ पञ्चावदानतायाः सर्वांगसाधारणताधिकरणम्—२० ॥

यथाश्रुतीति चेत् ॥ ७२ ॥ न

१ इदं सूत्रं वृत्तिकृन्मते नास्ति ।
२ इदं सूत्रं वृत्तिकृन्मते नास्ति ।

**चोदनैकत्वात् ॥७३॥ (२०) ॥२४॥**

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने दशमस्याध्यायस्य ( पश्वंगेषु पत्यंगं हविर्भेदो न कृत्स्नः पशुहविर्भेदो गृहमेधीयमपूर्वं कर्मेत्यादिबाधप्रसंगागतप्रकीर्णविचारो नाम ) सप्तमऽपादः॥ १० ॥७ ॥

---

१ प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासत्वाधिकरणम्—१ ॥

**प्रतिषेधः प्रदेशेऽनारभ्य विधाने प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् १॥**

---

१ ने च प्रेति जै० न्या० संमतः पाठः ।

अर्थप्राप्तवदिति चेत् ॥ २ ॥ न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥ अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधिनामेकदेशः स्यात् ॥ ४ ॥

३ निषेधस्यार्थवादताधि० — २ ॥

अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

२ अतिरात्रे षोडशिग्रहनिषेधस्य विकल्परूपताधिकरणम् — ३ ॥

शिष्ट्वा तु प्रतिषेधः स्यात् ॥ ६ ॥

१ जर्तिलोक्तौ निषेधस्यार्थवादताधि० ४ ॥

न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः

**स्यादानर्थक्यात्परसामर्थ्यात् ॥७॥**

२ त्रैयम्बकादावभिघारणानभिघारणादीना-

मर्थवादताधिकरणम्—९ ॥

**पूर्वैश्च तुल्यकालत्वात् ॥ ८ ॥**

२ आधाने उपवादस्य विकल्पताधि०—६॥

**उपवादश्च तद्वत् ॥ ९ ॥ प्रतिषेधादकर्मेति चेत् ॥ १० ॥ न शब्दपूर्वत्वात् ॥ ११ ॥**

२ दीक्षितदाननिषेधस्य पर्युदासताधि०—७

**दीक्षितस्य दानहोमपाकप्रतिषेधेऽविशेषात्सर्वदानहोमपाकप्रतिषेधः स्यात् ॥ १२ ॥ अक्रतुयुक्तानां वा**

१ ध्याञ्चेति जै० न्या० संमतः पाठः ।

धर्मः स्यात्कर्त्तोः प्रत्यक्षशिष्टत्वात् ॥ १३ ॥ तस्य वाप्यानुमानिकमविशेषात् ॥ १४ ॥ अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात् ॥ १५ ॥

२ वर्त्महोमादिभिराहवनीयस्य बाधाधि०–८॥

अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषशिष्टं स्यात् ॥ १६ ॥

२ वैमृधादिषु सामदृश्यविधेर्वाक्यशेषताधिकरणम्–९ ॥

अप्रकरणे तु यच्छास्त्रं विशेषे श्रू-

यमाणमविकृतमाज्यभागवत्प्राकृतप्र-
तिषेधार्थम् ॥ १७ ॥

विकारे तु[1] तदर्थं स्यात् ॥ १८ ॥
वाक्यशेषो वा क्रतुना ग्रहणात्स्या-
दनारभ्य विधानस्य ॥ १९ ॥

२ अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकार-
विधानाधिकरणम्— १० ॥

मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशा-
त्स्यात् ॥ २० ॥ अनाम्नाते[2] दर्शनात्
॥ २१ ॥ प्रतिषेधाच्च ॥ २२ ॥

---

१ इदं सूत्रं वृत्तिकृन्मते नास्ति ।
२ ते च देति जै० न्या० संमतः पाठः ।

२ अभ्यातिग्राह्यस्य विकृतावुपदेशाधि-
करणम्— ११ ॥

अभ्यातिग्राह्यस्य विकृतावुपदेशा-
दप्रवृत्तिः स्यात् ॥ २३ ॥ मासि ग्रहणं
च तद्वत् ॥ २४ ॥ ग्रहणं वा तुल्य-
त्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥
ग्रहणं समानविधानं स्यात् ॥ २७ ॥
मासि ग्रहणमभ्यासप्रतिषेधार्थम् २८॥

१ उपस्तरणाभिघारणाभ्यां सहैव चतुर-
वदानाधिकरणम्— १२ ॥

उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधान-
स्य होमसंयोगादधिकमाज्यमतुल्य-

त्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥२९॥ तत्संस्कारश्रुतेश्च ॥ ३० ॥ ताभ्यां वा सह स्विष्टकृतः [1][illegible]कृत्त्वे द्विरभि[2]घारणेन तदावृत्तिवचनात् ॥ ३१ ॥ तुल्यवद्धाभिधाय सर्वेषु भक्त्यनुक्रम[3]णात् ३२॥

१ उपांशुयाजेऽपि चतुरवत्तस्यावश्यकताधिकरणम्—१३ ॥

साप्तदश्यवन्नियम्येत ॥ ३३ ॥ हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ॥ ३४ ॥

---

१ सकृत्त्वे इति जै० न्या० संमतः पाठः ।

२ रघेति जै० न्या० संमतः पाठः ।

३ [illegible]संमतः पाठः ।

४ दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणम्— १४ ॥

पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ २५ ॥ न त्वनित्याधिकारोऽस्ति विधेर्नि(धौ नि)त्येन सम्बन्धस्तस्मादवाक्यशेषत्वम् ॥ २६ ॥ साति वं नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥ २७ ॥ कृत्स्नत्वात्तु तथा स्तोमे ॥ २८ ॥ कर्तुः स्यादिति चेत् ॥ २९ ॥ न गुणार्थत्वात्प्राप्ते नं चो-

१ ति न चैकेति मुद्रितपुस्तकसंमतः पाठः ।
२ ते च नोपेति जै० न्या० समतः पाठः ।

पदेशार्थः ॥४०॥ कर्मणोस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४१ ॥ यदि तु सान्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥४२॥ अपि वा विहितत्वाद्गुणार्थायां पुनः श्रुतौ सन्देहे श्रातिर्द्विदेवतार्था स्याद्यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४३ ॥ विधिं तु बादरायणः ॥ ४४ ॥ प्रतिषिद्धविज्ञानाद्वा ॥४५॥ तथा चान्यार्थदर्शनम् ॥ ४६ ॥

१ उपांशुयाजस्य ध्रौवाज्यद्रव्यकत्वाधि०—१५

उपांशुयाजमन्तरा यजतीति हविर्लिंगाश्रुतत्वाद्यथाकामी प्रतीयेत ॥ ४७ ॥ ध्रौवाद्वा सर्वसंयोगात् ॥ ४८ ॥

१ उपांशुयाजस्य प्रकृतदेवतानियमाधि०— १६

तद्वच्च देवतायां स्यात् ॥ ४९ ॥

तान्त्रीणां प्रकरणात् ॥ ५० ॥

९—२ उपांशुयाजस्य विष्ण्वादिदेवताकत्व-पौर्णमासीकर्तव्यत्वाधि०—१७—१८ ॥

धर्माद्वा स्यात्प्रजापतिः ॥ ५१ ॥

देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५२ ॥

विष्णुर्वा स्याद्धौत्राम्नानादमावास्या-
हविश्च स्याद्धौत्रस्य तत्र दर्शनात्
॥ ५३ ॥ अपि वा पौर्णमास्यां
स्यात्प्रधानशब्दसंयोगाद्गुणत्वान्मन्त्रो
यथा प्रधानं स्यात् ॥ ५४ ॥ आन-
न्तर्य्यं च सान्नाय्यस्य पुरोडाशेन दर्श-
यत्यमावास्याविकारे ॥ ५५ ॥ अग्नी-
षोमविधानात्तु पौर्णमास्यामुभयत्र
विधीयते॥५६॥प्रतिषिद्धयविधानाद्वा
विष्णुः समानदेशः स्यात् ॥ ५७ ॥
तथा चान्यार्थदर्शनम् ॥ ५८ ॥ न

चानंगं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात् ॥ ५९ ॥ गुणानां च परार्थत्वात्प्रवृत्तौ विधिलिंगानि दर्शयति ॥ ६० ॥ विकारे चाश्रुतित्वात् ॥ ६१ ॥

१ एकपुरोडाशायामप्युपांशुयागाधि०—१९ ॥

द्विपुरोडाशायां स्यादन्तरा ( लगुणा ) र्थत्वात् ॥ ६२ ॥ अजामिकरणार्थत्वाच्च ॥ ६३ ॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥ अशिष्टेन च सम्बन्धात् ॥ ६५ ॥ उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य

---

१ न्यायमालाकृन्मते सूत्रमेतदाधिकम् ।

विद्यमानत्वाद्विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावेऽश्रुतौ स्यात् ६६ उभयोस्तु विधानात् ॥ ६७ ॥ गुणानाञ्च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६८ ॥ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६९ ॥प्रशंसार्थमजामित्वम् ॥७०॥ (१९)॥३८॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने दशमस्याध्यायस्य (नानुयाजेषु नातिरात्रमित्यादिबाधोपयोगिनञर्थविचारो नाम ) अष्टमः पादः ॥ १० ॥ ८ ॥

इति दशमोऽध्यायः समाप्तः ॥ १० ॥

## अथ एकादशोऽध्यायः ॥

बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इति तन्त्रमिति निरूप्यते—

१ आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणम्— १ ॥

प्रयोजनाभिसम्बन्धात्पृथक् सतां ततः स्यादेककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥ अविधानात्तु नैवं स्यात् ॥ ३ ॥ शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ॥ ४ ॥

१ अङ्गानामेककार्याधिकरणम्— २ ॥

अंगानान्तु शब्दभेदात्क्रतुवत्स्यात्

फलान्यत्वम् ॥५॥ अर्थभेदस्तु तत्रा-
र्थेह्यैकार्थ्यादैककर्म्यम् ॥६॥ शब्दभे-
दान्नेति चेत् ॥७॥ कर्मार्थत्वात्प्रयोगे
ताच्छब्द्यं स्यात्तदर्थत्वात् ॥८॥ कर्तृ-
विधेर्नानार्थत्वाद्गुणप्रधानेषु ॥९॥ आर-
म्भस्य शब्दपूर्वत्वात् ॥ १० ॥

२ दर्शपूर्णमासादिकाम्यकर्मणां सर्वाङ्गोप-
संहाराधिकरणम्— २ ॥

एकेनापि समाप्येत कृतार्थत्वाद्यथा
क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात्
॥११॥ फलाभावादिति चेत् ॥१२॥
न कर्मसंयोगात्प्रयोजनमशब्ददोषं

स्यात ॥ १३ ॥ एकक्राव्यादिति चेत् ॥ १४॥ नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥ विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाक्रमं स्वशब्दो निवीतवत्तस्मात्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ तथा कर्मोपदेशःस्यात्॥१७॥क्रत्वन्तरेषु पुनर्वचनम् ॥ १८॥ उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वशब्दो यथाकामी प्रतीयेत ॥ १९ ॥

१ स्वशब्द इति वृत्तिकृन्मते न पठ्यते।

१ काम्यकर्मणां भूयोऽभ्यासाधिकरणम्—४॥

कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः ॥२०॥ अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥२१॥ सकृत्तु स्यात्कृतार्थत्वादंगवत् ॥ २२ ॥ शब्दार्थश्च तथा लोके ॥२३॥ अपि वा संप्रयोगे यथा कामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥ ऐकशब्द्यात्तथांगेषु ॥ २५ ॥ लोके कर्माऽर्थलक्षणम् ॥ २६ ॥

१ अवघातादीनामातण्डुलनिर्वृत्तेरभ्यासा-
धिकरणम्–५ ॥

क्रियाणामर्थशेषत्वात्प्रत्यक्षम (त्यक्षो) तस्तन्निर्वृत्त्याऽपवर्गः स्यात्॥ २७॥

१ अदृष्टफलस्यावघातादेः सकृदनुष्ठानाधि-
करणम्–६ ॥

धर्ममात्रे त्वदर्शनाच्छब्दार्थेनाप-वर्गः स्यात् ॥ २८ ॥

१ प्रयाजादीनामङ्गानां सकृदनुष्ठानाधिकर-
णम्– ७ ॥

क्रतुवद्वानुमानेनाभ्यासे फलभूमा-

---

१ इदं पूर्वाधिकरणान्न पृथगधिकरणमिति शास्त्रदीपि-
कायाम् ।

स्यात् ॥ २९ ॥ सकृद्वा कारणैकत्वा-
त् ॥३०॥ परिमाणं चानियमेन स्या-
त् ॥ ३१ ॥ फलारम्भनिवृत्तेः क्रतुषु
स्यात्फलान्यत्वम् ॥ ३२ ॥ अर्थवां-
स्तु नैकत्वादभ्यासःस्यादनर्थको यथा
भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्र-
धाने च क्रियार्थत्वादनियमः स्या-
त् ॥ ३३ ॥ पृथक्त्वाद्विधितः परि-
माणं स्यात् ॥ ३४ ॥ अनभ्यासो वा
प्रयोगवचनैकत्वात्सर्वस्य युगपच्छा-
स्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थ-

१ द्वा कारेति जै० न्या० पा० ।

त्वात् ॥ ३५॥ अभ्यासो वा छेदनस-
म्मार्गाऽवदानेषु वचनात्सकृत्त्वस्य ३६
अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥
१ बहुवचनस्य त्रित्वपरत्वे कापिञ्जलाधिक-
रणम्—८ ॥[1]
बहुवचनेन सर्वप्राप्तेर्विकल्पः स्या-
त् ॥ ३८ ॥ दृष्टः प्रयोग इति चे-
त्॥३९॥तथेह ॥ ४० ॥ भक्त्येति
चेत्॥४१॥तथेतरस्मिन्॥४२॥प्रथमं
वा नियम्येत कारणादतिक्रमः स्यात्
॥४३॥श्रुत्यर्थाविशेषात्॥४४॥ तथा

१ क्वचित्सूत्रपाठपुस्तके अधिकमिदं सूत्रम् ।

चान्यार्थदर्शनम् ॥ ४५ ॥ प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४६ ॥

१ "उत्तरा दोहयति" इत्यत्र सर्वासां गवां दोहनाधिकरणम्—९ ॥

उत्तरासु यावत्स्वमपूर्वत्वात्॥ ४७ यावत्स्वं वाऽन्यविधानेनानुवादः स्यात् ॥ ४८ ॥ साकल्यविधानात् ॥४९ ॥ बह्वर्थत्वाच्च ॥ ५०॥ अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ५१ ॥ इति व्याख्यातम् ॥५२॥ तथा पयःप्रतिषेधः कुमाराणाम् ॥ ५३ ॥ सर्वप्राप्त्यणापि

---

१ वृत्तिकृन्मते इदं सूत्रमधिकम् ।

लिंगेन संयुज्य देवताभिसंयोगात् ५४ ॥

२ आग्नेयादीनां प्रधानानां भेदेप्याघारादीनामङ्गानां तन्त्रेणानुष्ठानाधिकरणम्— १० ॥

प्रधानकर्मार्थत्वादंगानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५५ ॥ क्रमकोपश्च यौगपद्ये स्यात् ॥ ५६ ॥ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद्विशेषाग्रहणात् ॥ ५७ ॥ ऐकार्थ्यादव्यवायः स्यात् ॥ ५८ ॥ तथा चान्यार्थदर्शनं कामुकायनः ॥ ५९ ॥ तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ६० ॥ असंस्पृष्टो

ऽपि तादर्थ्यात् ॥६१॥ विभवाद्वा प्रदीपवत् ॥ ६२ ॥ अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ॥ ६३ ॥ सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६४ ॥ विधेस्त्वितरार्थत्वात्सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥६५॥ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६६ ॥ अपि चैकेन सान्निधानमविशेषको हेतुः॥६७ ॥क्कचिद्विधानान्नेति चेत् ॥६८॥ न विधेश्चोदितत्वात् ॥ ६९ ॥

---

१ क्वचिन्मूलपुस्तके इदमाधिकं सूत्रम् । वृत्ति० न्या० पुस्तकयोर्नास्ति ।

१ कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदा-
नाधिकरणम्—११ ॥

व्याख्यातं तुल्यानां यौगपद्यम-
गृह्यमाणविशेषाणाम् ॥ ७० ॥ भेदस्तु
कालभेदाच्चोदनाव्यवायात् स्याद्विशि-
ष्टानां विधिः प्रधानकालत्वात् ॥ ७१ ॥
तथा चान्यार्थदर्शनम् ॥ ७२ ॥ विधि-
रिति चेन्न वर्तमानापदेशात् ॥ ७३ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-
दर्शने एकादशस्याध्यायस्य ( तन्त्रस्योपो-
द्घातो नाम ) प्रथमः पादः ॥ ११ ॥ १ ॥

---

२ आग्नेयादीनां प्रधानानां तन्त्राधि०—१ ॥

एकदेशकालकर्तृत्वं मुख्यानामेक-

शब्दोपदेशात् ॥ १ ॥ अविधिश्चे-
त्कर्मणामभिसम्बन्धः प्रतीयेत तल्ल-
क्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां
प्रतिप्रधानं भावः स्यात् ॥ २ ॥

१ अङ्गानामपि समदेशादिनियमाधि०--२॥

अङ्गेषु[2] च तद्भावः प्रधानं प्रति
निर्देशात् ॥ ३ ॥ यदि तु कर्मणो विधि-
सम्बन्धः स्यादैकशब्द्यात्प्रधानार्था-
भिसंयोगात् ॥ ४ ॥ तथा चान्या-
र्थदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधान-

---

१ येत लक्षेति वृत्ति० पा० ।

२ पूर्वाधिकरणान्न पृथगधिकरणमिदमिति शास्त्रदी-
पिका ॥

वत्कर्मश्रुतेः परार्थत्वात्कर्मणोऽश्रुतेति त्वाच्च ॥ ६ ॥ अंगानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वम् ॥ ७ ॥ द्रव्यदेवतं तथेति चेत् ॥ ८ ॥ न चोदनाविधिशेषत्वान्नियमार्थौ विशेषः ॥ ९ ॥ तेषु समवेतानां समवायात्तन्त्रमंगानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ १०

१ दर्शपूर्णमासेष्टिप्रभृतिषु सङ्कभेदेनांगानां भेदेनानुष्ठानाधिकरणम्—३ ॥

इष्टिराजसूयचातुर्मास्येष्वेककर्म्यां-

1 श्रुतत्वेति न्या० पा०।

दंगानां तन्त्रभावः स्यात् ॥ ११ ॥ कालभेदान्नेति चेत् ॥ १२ ॥ नैकदेशत्वात्पशुवत् ॥ १३ ॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्सांगानामुपदेशः स्यात् ॥ १४ ॥ तथा चान्यार्थदर्शनम् ॥ १५ ॥ तथा तदवयवेषु स्यात् ॥ १६ ॥ पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् १७

२ अध्वरकल्पायां त्रिषु सङ्ख्येष्वंगानां भेदेनानुष्ठानाधिकरणम्—४ ॥

तथा स्यादध्वरकल्पेष्टौ विशेषस्यै-

१ तथा तदवयवेत्यस्य स्थाने वृत्तिकृ० तदावयेति पाठः ।

२ वृ० स्यादिति नास्ति ।

३ कल्पेष्टावित्यस्य स्थाने कल्पायामिति पाठो वृ० ।

ककालत्वात् ॥ १८ ॥ इष्टिरिति चैकवच्छ्रुतिः ॥ १९॥ अपि वापृथक्त्वात्तेषां च तन्त्रविधानात्सांगानामुपदेशः स्यात् ॥ २० ॥ प्रथमस्य वा कालवचनम् ॥ २१ ॥ फलैकत्वादिष्टिशब्दो यथान्यत्र ॥ २२ ॥

१ प्राजापत्यवसाहोमानां तंत्रेणानुष्ठानाधिकरणम्—९ ॥

वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात् ॥ २३ ॥

---

१ न वा कर्मपृथक्त्वात्तेषां चाङ्गेति बृ० पा०।
२ प्रधानेति बृ० पा० ।

१ ऐकादशिनगतवसाहोमस्य भेदेनानुष्ठा-
नाधिकरणम्—६ ॥

**कालभेदात्त्वावृत्तिर्देवताभेदे ॥२४॥**

१ यूपैकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठा-
नाधिकरणम्—७ ॥

**अन्ते यूपाहुतिस्तद्वत् ॥ २५ ॥ इतरप्रतिषेधो वा ॥ २६ ॥ अशास्त्रत्वाच्च देशनाम् ॥ २७ ॥**

१ साङ्गस्यावभृथस्याप्स्वनुष्ठानाधि०—८ ॥

**अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुराग्निसंयोगः ॥ २८ ॥ द्रव्य-**

---

१ भेदे स्यादावृत्तिरिति वृत्तिग्रन्थे पाठान्तरम् ।

देवतावत् ॥ २९ ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ लिंगदर्शनाच्च ॥ ३१ ॥ शङ्कविभागाच्च देवतानपनयः ॥ ३२ ॥

१ वरुणप्रघासेष्वाग्नेयादीनां मारुत्या भेदेनानुष्ठानाधिकरणम्—९ ॥

दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वं क्रियते ॥ ३३॥ अचोदनेति चेत् ॥ ३४ ॥ स्यात्पौर्णमासीवत् ॥ ३५ ॥प्रयोगचोदनेति चेत्॥३६॥ त (अ) थेह ॥ ३७॥ आसादनमिति चेत् ॥ ३८ ॥ नोत्तरेणैकवाक्य-

त्वात् ॥३९॥ अवाच्यत्वात् ॥४०॥
आम्नायवचनं तद्वत् ॥ ४१ ॥

१ उत्तरदक्षिणविहारयोः कर्त्रभेदाधि०-१० ॥

कर्तृभेदस्तथेति चेत् ॥ ४२ ॥ न
समवायात् ॥ ४३ ॥ लिङ्गदर्शनाच्च
॥४४॥ वेदिसंयोगादिति चेत्॥४५॥
न देशमात्रत्वात् ॥ ४६ ॥

१ उत्तरदक्षिणविहारयोः पत्नीसंयाजादीनां
भेदेनानुष्ठानाधिकरणम्-११ ॥

एकाग्नित्वादपरेषु तन्त्रैः स्यात्
॥४७॥ नाना वा कर्तृभेदात्॥४८ ॥

१ वाजपेये प्राजापत्यपश्वालम्भशेषस्य ब्रह्मसामकाल उत्कर्षाधिकरणम्—१२ ॥

पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्त-स्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ४९ ॥ संस्कारप्रतिषेधो वा वाक्यै-कत्वे क्रतुसामान्यात् ॥ ५० ॥ वपानां चानभिघारणस्य दर्शनात् ॥ ५१ ॥

१ अहीने उक्ष्णामुत्सर्गस्य कर्मशेषप्रति-षेधार्थताधिकरणम्—१३ ॥

पञ्चशारदीयास्तथेति चेत् ॥ ५२ ॥

---

१ पार्याचेति वृ. पा०

न चोदनैकवाक्यत्वात् ॥५३॥ संस्काराणां च दर्शनात् ॥ ५४ ॥

१ दशपेयाभिषेचनीययोर्भेदेन प्रयोगाधि–१४

दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां तत्समानं तन्त्रं स्यात् ॥५५॥ समानवचनं तद्वत् ॥ ५६ ॥ अप्रतिकर्षौ वाऽर्थहेतुत्वात्सहत्वं विधीयते ॥५७॥ पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥५८॥ दीक्षाणां चोत्तरस्य॥५९॥ समानः कालसामान्यात् ॥ ६० ॥

२ वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणम्–१५ ॥

निष्कासस्यावभृथे तदेकदेशत्वात्

पशुवत्पशानाविप्रकर्षः स्यात् ॥ ६१ ॥
अपनयो वा प्रसिद्धेनाभिसंयोगात्
॥ ६२ ॥ प्रतिपत्तिरिति चेन्न कर्म-
संयोगात् ॥ ६३ ॥

२ प्रायणीयनिष्कास उदयनीयनिर्वापस्य
संस्कारकर्मताधिकरणम्—१६ ॥

उदयनीये[1] च तद्वत् ॥ ६४ ॥
प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६५ ॥
अर्थकर्म वा शेषत्वाच्छ्रपण[2]वत्तदर्थेन
विधानात् ॥ ६६ ॥ ( १६ ) ॥२२॥

---

१ प्रायणीये इति वृत्ति० पा० ।

२ क्षूयणीति न्या०मा०पा० ।

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-
दर्शने एकादशस्याध्यायस्य
( संक्षेपेण तन्त्रवापानिरूपणं नाम )
द्वितीयः पादः॥ ११॥२॥

---

१ वेद्याद्यङ्गानां प्रधानान्यकालकर्तव्यता-
धिकरणम्--१ ॥

**अङ्गानां मुख्यकालत्वाद्वचनाद्-
न्यकालत्वम् ॥ १ ॥**

१ आधानस्य तंत्रेणानुष्ठानाधि०--२ ॥

**द्रव्यस्याकर्मकालनिष्पत्तेः प्रयो-
गः सर्वार्थः स्यात्स्वकालत्वात् ॥२॥**

---

१ द्रव्यस्य चाकेति न्या० पा० ।

१ अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठा-नाधिकरणम्--२ ॥

यूपश्चाकर्मकालत्वात् ॥ ३ ॥ एक-यूपं च दर्शयति ॥ ४ ॥

१ यूपसंस्काराणां तन्त्रेणानुष्ठानाधि०—४॥

संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥५॥ तत्कालास्तु यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानां च वचनाद-न्यकालत्वम् ॥६॥ सकृन्मानं च दर्श-यति ॥ ७ ॥

---

१ इदं सूत्रं वृत्तिकृन्मते नास्ति ।

१ स्वरोस्तन्त्रेणानुष्ठानाधिकरणम्-- ५ ॥

स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ८ ॥ साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥ सोमान्ते च प्रतिपत्तिदर्शनात् ॥ १० ॥ तत्कालो वा प्रस्तरवत् ॥ ११ ॥ न वोत्पत्तिवाक्यत्वात्प्रदेशात्पस्तरे तथा ॥ १२ ॥

२ अहर्गणे कृष्णविषाणाप्रासनस्यान्त्याहनियमाधिकरणम्-- ६ ॥

अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाहनि विकल्पः स्यात ॥ १३ ॥ पाणेस्त्वश्रुतिभूतत्वा-

द्विषाणानियमः स्यात्प्रातः सवनमध्य-
न्दिनाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥

१ राजसूये नानाबीजेषु वाग्विसर्गस्य चरमकालनियमाधिकरणम्— ७ ॥

वाग्विसर्गो हविष्कृता बीजभेदे
तथा स्यात् ॥ १५ ॥

१ अग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम्— ८ ॥

पशौ च पुरोडाशे समानतन्त्रं
भवेत् ॥ १६ ॥

१ अग्निचयनेऽग्निविमोकस्य मतभेदेन व्यवस्थाधिकरणम्— ९ ॥

अग्नियोगः सोमकाले तदर्थत्वात्

संस्कृतकर्मणः परेषु सांगस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ॥ १७ ॥ प्रधानापवर्गे वा तदर्थत्वात् ॥ १८ ॥ अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ १९ ॥ अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् ॥ २० ॥

१ उपसत्कालस्य सुब्रह्मण्याह्वानस्य तन्त्रेणानुष्ठानाधिकरणम्- १० ॥

सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २१ ॥

१ सुत्याकालिकसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम्- ११ ॥

तत्कालास्त्वावर्तेत प्रयोगतो वि-

शेषसम्बन्धात् ॥ २२ ॥ अप्रयोगांगमिति चेत् ॥ २३ ॥ स्यात्प्रयोगनिर्देशात्कर्तृभेदवत् ॥ २४ ॥ तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ॥ २५ ॥ अग्निवदिति चेत् ॥ २६ ॥ न प्रयोगसाधारण्यात् ॥ २७ ॥ लिंगदर्शनाच्च ॥ २८ ॥ तद्धि तथेति चेत् ॥ २९ ॥ नाशिष्टत्वादितरन्यायत्वाच्च ॥ ३० ॥ विध्येकत्वादिति चेत् ॥ ३१ ॥

---

१ नसंयोगादिति वृत्तिकृन्मते पाठः ।

२ चेदपेति वृत्ति० पाठः ।

३ चशब्दो वृत्ति० नास्ति ।

न कृत्स्नस्य पुनः प्रयोगाप्रधानवत् ॥ ३२ ॥

१ देशपात्रर्त्विजामन्यप्रयोगे पूर्वदेशाद्यादानस्यैच्छिकताधिकरणम्—१२ ॥

लौकिकेषु यथाकामी संस्कारानर्थलोपात् ॥ ३३ ॥

१ पात्राणां तन्त्रस्य नियमाधि०—१३ ॥

यज्ञायुधानि धार्येरन्प्रतिपत्तिविधानादृजीषवत् ॥ ३४ ॥ यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३५ ॥ मुख्यस्य

१ पार्थलोपादिति वृत्ति० पाठः ।

२ ध्यवसायेति जै० न्या० मा० पाठः ।

धारणं वा मरणस्यानियतत्वात् ॥ ३६ ॥ यो वा यजनीयेह्नि म्रियेत¹ सोऽधिकृतः स्यादुपवेषवत् ॥ ३७ ॥ न शास्त्रलक्षणत्वात् ॥ ३८ ॥ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३९ ॥ शब्दासामञ्जस्यमिति चेत् ॥ ४० ॥ तथाऽऽशिर॥ ४१ ॥ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा² प्रकृतावर्थेहापूर्वार्थवद्भूतोपदेशः ॥ ४२ ॥

---

१ म्रियते इति० पा० ।

२ कीर्षया कृतेति वृत्ति० पा० ।

१ पात्राणामाधानमारभ्य धारणनियमाधिकरणम्- १४ ॥

प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ॥ ४३ ॥ अग्न्याधेये वाऽविप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥ ४४ ॥ प्रतिपत्तिर्वा[२] यथान्येषाम् ॥ ४५ ॥

२ सर्वसोमानामुपरिष्टात्प्राजापत्यप्रचाराधिकरणम्–१५ ॥

उपरिष्टात्सोमानां प्राजापत्यैश्चर-

---

१ पूर्वाधिकरणान्तर्गतमिदमधिकरणमिति शास्त्रदीपिकातो ज्ञायते ।

२ वाप्यन्ये इति वृत्ति० पा० ।

न्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ ४६ ॥ अंगविपर्यासो विना वचनादिति चेन्न ॥ ४७ ॥ उत्कर्षः संयोगात्कालमात्रमितरत्र ॥ ४८ ॥ प्रकृतिकालसत्तेः शब्दव-तामिति चेत् ॥ ४९ ॥ न श्रुतिप्रति-षेधात्॥५०॥विकारस्थान इति चेत् ॥५१॥ न चोदनापृथक्त्वात् ॥५२॥

१ सवनीये पुरोडाशे देवतोत्कर्षाधि०—१६ ॥

उत्कर्षे सूक्तवाकस्य न सोमदे-वतानामुत्कर्षः पश्वनंगत्वाद्यथा नि-ष्कर्षेऽनन्वयः ॥ ५३ ॥ वाक्यसंयो-

गाद्योत्कर्षः समानतन्त्रत्वादर्थलोपा-
दनन्वयः ॥ ५४ ॥ ( १६ ) ॥ २० ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-
दर्शने एकादशस्याध्यायस्य (तन्त्रोपोद्घातो
नाम ) तृतीयः पादः ॥ ११ ॥ ३ ॥

---

१ राजसूये सोमापौष्णादिकेङ्गानां भेदेना-
नुष्ठानाधिकरणम्- १ ॥

चोदनैकत्वाद्राजसूयेऽनुक्तदेशका-
लानां समवायात्तन्त्रमंगानि॥ १ ॥प्रति-
दक्षिणं वा कर्तृसम्बन्धादिष्टिवदंगभूत-
त्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वा-

देकशब्दोपदेशः स्यात् ॥ २ ॥ तथा चान्यार्थदर्शनम् ॥ ३ ॥

२ राजसूये कर्तुस्तन्त्रताधिकरणम्— २ ॥

अनियमः स्यादिति चेत् ॥ ४ ॥

नोपदिष्टत्वात् ॥ ५ ॥ लाघवापत्तिश्च[1] ॥ ६ ॥ प्रयोजनैकत्वात् ॥७॥ विशेषार्था पुनः श्रुतिः ॥ ८ ॥

१ अवेष्टावङ्गानां भेदाधिकरणम्— ३ ॥

अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ९ ॥ वचनात्कामसंयोगेन ॥ १० ॥ क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ११

---

[1] वापत्तीति °पा० ।

१ पवमानेष्टिहविषां भेदेनानुष्ठानाधि०—४॥

पवमानहविःष्वैकतन्त्र्यं प्रयोगवच-नैकत्वात्॥१२॥लिंगदर्शनाच्च १३॥ वचनात्तु तन्त्रभेदः स्यात्॥ १४॥ सहत्वे नित्यानुवादः स्यात्॥ १५॥

५ द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकस्य द्वादशाहताधिकरणम्—५॥

द्वादशाहे तत्प्रकृतित्वादेकैकमह-रपवृज्येत कर्मपृथक्त्वात्॥ १६॥ अह्नां वा श्रुतिभूतत्वात्तत्र सांगं क्रियेत यथा माध्यन्दिने॥ १७॥ अपि वा फलकर्तृसम्बन्धात्सह प्रयोगः स्यादा-

ग्नेयाग्नीषोमीयवत् ॥ १८ ॥ सांगकाल-श्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ १९ ॥ तदपेक्षं च द्वादशत्वम् ॥ २० ॥ दीक्षोपसदां च संख्या पृथक्पृथक् प्रत्यक्षसंयोगात् ॥ २१ ॥ तथा चान्यार्थदर्शनम् ॥ २२ ॥ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २३ ॥

१ प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणम् — ६ ॥

भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात् ॥ २४ ॥

तथा चान्यार्थदर्शनम् ॥ २५ ॥ श्वः-सुत्यावचनं तद्वत् ॥ २६ ॥ पश्वतिरेकश्च ॥ २७ ॥

२ उपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणम्—७ ॥

सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥२८॥ अपि वेन्द्राभिधानत्वात्सकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वादविभागाच्च ॥ २९ ॥

---

१ नं च तेति वृ॰ पा॰ ।

१वाजपेये प्राजापत्येषु कुम्भ्यादी नां तन्त्र
ताधिकरणम्—८ ॥

**पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात् ॥ ३० ॥**

१ भिन्नदेवताकेष्वपि शूलादीनां तंत्रता-
धिकरणम्—९ ॥

**भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥ ३१ ॥ अर्थाद्वा लिंगकर्म स्यात् ३२ ॥**

१ वसाकुम्भ्यापि तंत्रताधिकरणम्—१० ॥

**अयाज्यत्वाद्वसानां भेदः स्यात्स्वयाज्याप्रदानत्वात् ॥ ३३ ॥ अपि वा**

१ पूर्वाधिकरण एवास्याधिकरणस्यान्तर्भाव उक्तः शास्त्र-
दीपिकायाम् ।

प्रतिपत्तित्वात्तंत्रं स्यात्स्वत्वस्याश्रु-
तिभूतत्वात् ॥ ३४ ॥ सक्थादिति चे-
त् ॥ ३५ ॥ न कालभेदात् ॥ ३६ ॥

१ भिन्नजातिषु कुम्भ्यादीनां भेदेनानुष्ठाना-
धिकरणम्--११ ॥

जात्यन्तरेषु भेदः पक्तिवैषम्या-
त् ॥ ३७ ॥ वृद्धिदर्शनाच्च ॥ ३८ ॥

१ अश्वप्रतिग्रहेष्ट्यां प्रतिपुरोडाशं कपाल-
भेदाधिकरणम्--१२ ॥

कपालानि च कुम्भीवत्तुल्यसंख्या-
नाम् ॥ ३९ ॥ प्रतिप्रधानं वा प्रकृति-

१ न्तरभेद इति वृ० पा० ।

वत् ॥ ४० ॥ सर्वेषां चाभिप्रथनं स्यात् ॥ ४१ ॥

१ व्रीह्यवहननादौ प्रतिप्रहारं मंत्रस्यानावृत्यधिकरणम्–१३ ॥

एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् ॥ ४२॥ तस्मिन्मंत्रार्थनानात्वादावृत्तौ मंत्रस्यासकृत्प्रयोगः स्यात् ॥ ४३ ॥

१ नानाबीजेष्टौ प्रतिप्रहारं मंत्रावृत्त्याधिकरणम्– १४ ॥

द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः

---

१ इदं सूत्रं नेति बहवो विवदन्ते ।

प्रयोगान्मंत्रस्यं च तद्गुणत्वात्पुनः प्रयोगः स्यात्तदर्थेन विधानात्॥ ४४ ॥

१ दर्शपूर्णमासादौ प्रतिनिर्वापादिमन्त्रावृत्त्यधिकरणम्— १५ ॥

निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात्॥ ४५॥ द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् ॥ ४६ ॥

१ वेदिप्रोक्षणे प्रत्यावृत्ति मंत्रानावृत्त्याधिकरणम्— १६ ॥

वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४७ ॥ एकस्य वा

१ स्थ तेति वृ० पा० ।

२ वनास्तेति वृ० पा० ।

गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ॥ ४८ ॥

१ कण्डूयनमन्त्रस्यानावृत्त्यधि०—१७ ॥

कण्डूयने प्रत्यङ्गं कर्मभेदात्स्यात् ॥ ४९ ॥ अपि वा चोदनैककालमेककर्म्यं स्यात् ॥ ५० ॥

ज्योतिष्टोमे स्वप्नादिमन्त्रानावृत्त्यधि०—१८॥

स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५१ ॥

१ दीक्षितस्य प्रयाणे मन्त्रानावृत्त्यधि०—१९॥

प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५२ ॥

---

१ भेदः स्योति बृ० पा।

१ उपरवमन्त्रस्यावृत्त्याधिकरणम्—२० ॥

उपरवमन्त्रस्तंत्रं स्याल्लोकवद्धुप[1]चनात् ॥५३॥ न सन्निपातित्वादसन्निपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनम् ॥ ५४ ॥

१ हविष्कृदादिमन्त्राणामावृत्त्याधि०—२१ ॥

हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिः कालभेदात्[2]स्यात् ॥५५ ॥ अध्रिगोश्च विपर्यासात् ॥ ५६ ॥ कारिष्यद्वचनात् ॥५७॥(२१ )॥ २७ ॥

---

१ वच्च बाह्लीति वृ० पा० ।

२ हविष्कृन्मते स्यादिति नास्ति ।

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसा-
दर्शने एकादशस्याध्यायस्य ( आवापप्रपञ्चो
नाम ) चतुर्थः पादः ॥ ११ ॥ ४ ॥
समाप्त एकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोध्यायः ॥

बह्वाग्नेयादिप्रधानानां सकृदनुष्ठितप्रयाजा-
द्यंगेनोपकार इति निरूप्यते—

१ अग्नीषोमीयप्रयाजादिभिः पुरोडाशस्यो-
पकाराधिकरणम्—१ ॥

**तन्त्रिसमवाये चोदनातः समाना-
नामेकतन्त्रत्वम्[1]तुल्येषु तु भेदः[2]स्याद्वि-**

---

१ न्त्रमित्विति वृ० पा० ।
२ भेदो विधिक्रमेति वृ० पा० ।

धिप्रक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकाल-निर्देशात् ॥ १ ॥ गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः[1]स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ॥ ४ ॥ एकेषां चाशक्यत्वात् ॥ ५ ॥ एकाग्निवच्च दर्शनम् ॥ ६ ॥

२ पुरोडाशे आज्यभागयोः कर्तव्यताधिकरणम्—२ ॥

जैमिनेः परतन्त्रा[2]त्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥ ७ ॥

---

१ सिद्धः स्येति वृ० पा० ।

२ तन्त्रापेति वृ० पा० ।

१ सोमे दार्शिकवेद्यकरणाधि० —३ ॥

नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥ अकर्म वा कृतदृषा स्यात् ॥ ९ ॥

१ सौम्यचर्वादिहोमस्यैष्टिकपात्रैरनुष्ठानाधिकरणम्—४ ॥

पात्रेषु च प्रसंगः स्याद्धोमार्थत्वात् ॥ १० ॥ न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसंगः स्यात् ॥ ११ ॥

२ शामित्रे पशुपुरोडाशश्रपणाभावाधि०५॥

शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १२ ॥

२ कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्रा-
जहितेश्रपणाधिकरणम्--६॥

**श्रपणं चाऽग्निहोत्रस्य शालामु-
खीये न स्यात्प्राजाहितस्य विद्यमान-
त्वात् ॥ १३ ॥**

१ हविर्धानशकटान्यशटकटेनौषधद्रव्यकपु-
रोडाशनिर्वापाधिकरणम्-- ७ ॥

**हविर्धाने निर्वपणार्थे साधयेतां प्र-
युक्तत्वात् ॥ १४ ॥ अप्रसिद्धिर्वाऽन्य-
देशत्वात्प्रधानवैगुण्यादवैगुण्ये प्रसंगः
स्यात्॥ १५॥अनसां च दर्शनात् १६**

१ प्रायणीयादिषु दीक्षाजागरणस्याभावा-
धिकरणम्--८ ॥

**तद्युक्तं च कालभेदात् ॥ १७ ॥**

१ विहारभेदेन मन्त्रभेदाधिकरणम्--९ ॥

**मन्त्राश्च सन्निपातित्वात् ॥ १८ ॥**

१ दीक्षणीयादिष्वग्न्यन्वाधानस्याभावा-
धिकरणम्--१० ॥

**धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ॥ १९ ॥**

१दीक्षणीयादिषु व्रतोपायनाभावाधि०--११॥

**तथा व्रतमुपेतत्वात् ॥२०॥** विप्र-

---

१ मुपैमत्वोति व्र० पा० ।

तिषेधाच्च ॥ २१ ॥ सत्यवदिति चेत्
॥२२॥ न संयोगपृथक्त्वात् ॥ २३ ॥

१ ऐष्टिकेष्वङ्ग्यन्वाधानाननुष्ठानाधि०—१२॥

ग्रहार्थं[1] च पूर्वमिष्टेस्तदर्थत्वात् २४
शेषवदिति चेत् ॥ २५ ॥ न वैश्वदे-
वो हि ॥२६॥ स्याद्व्यपदेशात्[2] ॥२७॥
न गुणार्थत्वात् ॥ २८ ॥

१ ऐष्टिकेषु पत्नीसन्नहनाननुष्ठानाधि०—१३

सन्नहनञ्च[3] वृत्तत्वात् ॥ २९ ॥

---

१ ग्रहणार्थमिति अधिकरणन्यायमालायां पाठान्तरम् ।
२ स्याद्वा व्यपेति वृ० पा० ।
३ चशब्दरहितः पाठो वृत्तिकृन्मते ।

१ ऐष्टिकेष्वारण्यभोजनाभावाधि०—१४ ॥

अन्यविधानादारण्यभोजनं न स्या-
दुभयं हि वृत्त्यर्थम् ॥ ३० ॥

१ तेषु शेषभक्षानुष्ठानाधि०—१५ ॥

शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ३१

१ तेष्वन्वाहार्यदानाभावाधि०—१६ ॥

भृतत्वाच्च परिक्रयः ॥ ३२ ॥

१ तेषु शेषभक्षस्य संस्कारार्थतया कर्तव्य-
त्वाधिकरणम्—१७ ॥

शेषभक्षास्तथेति चेत् ॥ ३३ ॥ न
कर्मसंयोगात् ॥ ३४ ॥

१ तेषु होतुर्वरणसद्भावाधिकरणम्—१८ ॥

प्रकृतिवरणात्प्राकृतिवं वरणं होतुः

क्रियेत ॥ ३५ ॥ अह्लापीति चेत् ॥ ३६ ॥ न प्राक्नियमात्तदर्थं हि ॥ ३७ ॥ निर्दिष्टस्येति चेत् ॥ ३८ ॥ नाश्रुतत्वात् ॥ ३९ ॥ होतुस्तथेति चेत् ॥ ४० ॥ न कर्मसंयोगात् ॥ ४१ ॥

१ आतिथ्यायां बर्हिषः प्रतिकर्मप्रोक्षणाभावाधिकरणम्—१९ ॥

यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितंत्रं क्रियेत ॥ ४२ ॥ न

---

१ क्रियते इति वृ० पा० ।

२ ऽनुष्ठीति वृ०पा० ।

३ क्रियते इ[illegible] [illegible]निक्रुन्मते पाठः ।

वा कृतत्वात्तदुपदेशो हि ॥ ४३ ॥

१ तस्यां स्तरणमन्त्रावृत्त्यधि०—२० ॥

देशपृथक्त्वान्मंत्रोऽभ्यावर्तते॥४४॥

१ बर्हिषो देशान्तरनयने सन्नहनहरण-
मन्त्रयोरप्रयोगाधि०—२१ ॥

सन्नहनहरणे तथेति चेत् ॥४५॥

नान्यार्थत्वात्॥ ४६ ॥(२१)॥२४॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमी-
मांसादर्शने द्वादशस्याध्यायस्य ( पशुधर्माणां
पशुपुरोडाशे सौमिकवेदेरुत्तरकालिककर्मसु
प्रसङ्ग इत्यादिविचारो नाम )
प्रथमः पादः ॥१२॥१॥

---

१ न्त्रोऽभ्यावर्तेति वृ० पा० ।

१ विहाराग्नेर्वैदिककर्ममात्रार्थताधि०—१ ॥

विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥ मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥ सति चोपासनस्य दर्शनात् ॥ ४ ॥ अभावदर्शनाच्च ॥ ५ ॥ मांसपाको विहितप्रतिषेधः स्याद्दाहु[1]तिसंयोगात् ॥ ६ ॥ वाक्यशेषो वा [2]दक्षिणेस्मिन्ननारभ्य विधानस्य ॥ ७ ॥

१ सवनीयपशौ पशुपुरोडाशस्य कर्तव्यताधिकरणम्—२ ॥

सवनीये छिद्रापिधानार्थत्वात्पशु-

---

१ स्यादाहुतीति वृ० पा० ।

२ दक्षिणेस्मिन्नारेति जै० ना० पा० ।

पुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥ क्रिया वा देवतार्थत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥

१ सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम्—३ ॥

हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्थां पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ॥ ११ ॥

१ तृतीयसवने हविष्कृदाह्वानस्यापुनरावृत्त्यधिकरणम्—४ ॥

पशौ तु संस्कृते[१] विधानात्तार्तीयस-

---

१ संस्कृते इति जै० न्या पा० ।

वन (नि)केषु स्यात्सौम्याश्विनयोश्चा-
पवृत्तार्थत्वात् ॥१२॥ योगाद्वा यज्ञाय
तद्विमोके विसर्गः स्यात् ॥ १३ ॥

१ निशि यज्ञे अमावास्यातंत्रप्रयोगाधि०५

निशि यज्ञे प्राकृतस्याप्रवृत्तिः स्यात्
प्रत्यक्षशिष्टत्वात् ।१४॥ कालवाक्यभे-
दाच्च तन्त्रभेदः स्यात् ॥१५॥ वेद्युद्धन-
नव्रतं विप्रतिषेधात्तदेव स्यात् ॥१६॥
तंत्रमध्ये विधानाद्वा तत्तन्त्रा सवनी-
यवत् ॥ १७ ॥ वैगुण्यादिध्माबर्हिर्न
साधयेदग्न्याधानं च यदि देवता-
र्थम् ॥ १८॥

१ विकृतिष्वप्यारम्भणीयानुष्ठानाधि०—६ ॥

आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन ॥ १९ ॥ संकृद्वाऽऽरम्भसंयोगात् ॥ २० स्याद्वा कालस्याशेषभूतत्वात् ॥ २१ ॥ आरम्भविभागाच्च ॥ २२ ॥

२--२ प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणम्—७ ॥

विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ २३ ॥

---

१इदं सूत्रं भाष्ये जैमिनिन्यायमालायां च नास्ति, वृत्तिकृन्मतेरित ।

१ तुल्यसंख्याकानां धर्मविरोधे [1]प्रथमस्यैव धर्मानुष्ठानाधिकरणम्—८ ॥

मुख्यं वा पूर्वचोदनाल्लोकवत् ॥२४॥

तथा चान्यार्थदर्शनम् ॥२५॥

२ अङ्गगुणविरोधे प्रधानगुणस्यैव बलवत्त्वाधिकरणम्— ९ ॥

अङ्गगुणविरोधे च तादर्थ्यात् ॥२६॥

१ परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम्— १० ॥

परिधिर्व्यर्थत्वादुभयधर्मा स्यात् २७॥

१ तस्मिन्विरोधियूपधर्माननुष्ठानाधि०—११ ॥

यौप्यस्तु विरोधे स्यान्मुख्यानन्त-

१ इदं सूत्रं वृत्तिकारमत एव नास्ति ।

यात् ॥ २८ ॥ इतरो वा तस्य तत्र विधानात् ॥ २९ ॥ उभयोश्चांगसंयोगः ॥ ३० ॥

२ सवनीयपशुपुरोडाशयोः पशोरेव तन्त्रिताधिकरणम्—१२ ॥

पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतभूतत्वात् ॥ ३१ ॥ पाशुकं वा तस्य वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३२ ॥ पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३३ ॥

१ समानतन्त्रप्रकृतिविकृत्योर्विकृतितन्त्रानुष्ठानाधिकरणम्— १३ ॥

अपूर्वं च प्रकृतौ समानतन्त्रा

१ तन्त्र चेदिति सू० [० ...] [illegible]

चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३४ ॥

१ आग्रयणे प्रसूनबर्हिषामेव ग्रहणाधि०– १४

आधिक्यश्च गुणः साधारणेऽविरोधा-
त्कांस्यभोजिवदमुख्येऽपि ॥ ३५ ॥

२ द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रि-
त्वाधिकरणम्– १५ ॥

तत्प्रवृत्त्या तु तन्त्रस्य नियमः
स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३६ ॥
न वाऽविरोधात् ॥ ३७ ॥ अशास्त्रल-
क्षणाच्च ॥ ३८ ॥ ( १५ ) ॥ २१ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने
द्वादशस्याध्यायस्य ( सवनीयपशोस्तन्त्रित्वं

न सत्पुरोडाशानां विकृतिस्तंत्रिणी न प्रकृतिरन्वारम्भणीया विकृतिष्वपि स्यान्न प्रकृतावेवेत्यादिविचारो नाम) द्वितीयः पादः ॥१२॥२॥

---

२ अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणम्– १ ॥

विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ अविरोधो वां उपरिवासो हि[१] वत्सत्वक् ॥ २ ॥

---

१ धो वोपरिवासो वेति बृ० पाठः ।

२ नृ० मते हिपदं नास्ति ।

१ अनुनिर्वाप्यपशुपुरोडाशानां पुरोडाशस्यैव तंत्रित्वाधिकरणम्- २ ॥

अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥ ३ ॥ आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥ स्वस्थानत्वाच्च ॥५॥ स्विष्टकृच्छ्रवणान्नेति चेत् ॥६॥ विकारः पवमानवत् ॥ ७ ॥ अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ८ ॥

१ भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणम्- ३ ॥

एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ९ ॥

१ प्रयोजनैक्ये गुणानां विकल्पाधि०—४॥

एकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ १० ॥ अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥ नाश्रुतित्वात् ॥ १२ ॥ सति चाभ्यासशास्त्रत्वात् ॥ १३ ॥ विकल्पवच्च दर्शयति ॥ १४ ॥ कालान्तरेऽर्थवत्त्वं स्यात् ॥ १५ ॥

१ वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम्—५ ॥

प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः १६ ॥

---

१ प्रधानस्येति वृत्तिकृन्मते नास्ति ।

१ नैमित्तिकप्रायश्चित्तानां समुच्चयाधि०-६ ॥

**समुच्चयस्त्वदोषार्थनिर्घातार्थेषु॥१७॥**

१ कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणम्- ७ ॥

**मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १८ ॥ विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात् प्रयोगस्य ॥ १९ ॥**

१ कर्मणि प्रवचनस्वरेणैव मन्त्रोच्चारणविध्यधिकरणम्- ८ ॥

**भाषास्वरोपदेशेषु ऐरवत्प्रवचन-**

---

१ दोषार्थेष्विति वृत्तिकृन्मते पाठः ।

२ देशादैरोति जै० न्या० पा० ।

प्रतिषेधः स्यात् ॥ २० ॥ मन्त्रोपदेशो वा न भाषिकस्य प्रायात्तेर्भाषिकश्रुतिः ॥ २१ ॥ विकारः कारणाग्रहणे ॥ २२ ॥

१ ब्राह्मणोत्पन्नस्य ( भाषिकेणोपदिष्टस्य ) मन्त्रस्य भाषिकस्वरेणैवोच्चारणाधि०-९॥

तन्न्यायत्वाददृष्टोऽप्येवम् ॥२३ ॥ तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥२४॥

१ मन्त्राणां पाठानन्तरमेव पदार्थानुष्ठानाधिकरणम्— १० ॥

मन्त्राणां करणार्थत्वान्मन्त्रान्तेन

१ महे इति वृ० पा० ।

कर्मादिसान्निपातः स्यात्सर्वस्य वचनार्थत्वात् ॥ २५ ॥

१ वसोर्धारायां मन्त्रान्ते कर्मसन्निपाताधिकरणम्— ११ ॥

सन्ततवचनाद्धारायामादिसंयोगः ॥ २६ ॥ कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात्॥ २७ ॥

१ आघारेपि मंत्रान्ते कर्मसन्निपाताधिकरणम्— १२ ॥

आघारे च दीर्घधारत्वात् ॥२८॥

१ एककार्यार्थमंत्राणां विकल्पाधि०—१३ ॥

मन्त्राणां सान्निपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥

१ संख्याविहितमंत्राणां समुच्चयाधि०—१४॥

संख्याविहितेषु समुच्चयोऽसान्निपातित्वात् ॥ २० ॥

१ब्राह्मणविहितमंत्राणां विकल्पाधि०—१५॥

ब्राह्मणविहितेषु च संख्यावत्तेषामुपदिष्टत्वात् ॥ २१ ॥ याज्यावषट्कारयोश्च समुच्चयंदर्शनं तद्वत् ॥ २२ ॥ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ २३ ॥ गुणार्थत्वादुपदेशस्य ॥ २४ ॥ वषट्कारे नानार्थत्वात्समुच्चयः ॥ २५ ॥

---

१ दस्य देति जै० न्या० मा० ।

१ हौत्राणां मंत्राणां समुच्चयाधि०— १६ ॥

हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ ३६ ॥ समुच्चयो वा क्रियमाणानुवादित्वात् ॥ ३७ ॥ समुच्चयं च दर्शयति ॥ ३८ ॥ ( १६ ) ॥ १८ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने द्वादशस्याध्यायस्य ( त्वगासासोरागारणतऋजुत्वसन्ततत्वादीनां समुच्चयो यवव्रीह्योर्विकल्पश्चेत्यादिविचारो नाम ) तृतीयः पादः ॥ १२ ॥ ३ ॥

---

१ प्रसिद्धन्मते क्रियमाणानुवादित्वात्समुच्चयो वा हौत्राणामित्येवं सूत्रस्य पाठः ।

१ जपस्तुत्याशीरभिधानानां समुच्चयाधिकरणम्— १ ॥

जपाश्चाकर्मसंयुक्ताः[1] स्तुत्याशीरभिधानाश्च[2] याजमानेषु समुच्चयः स्याद्राशीःपृथक्त्वात् ॥ १ ॥ समुच्चयं च दर्शयति ॥ २ ॥

१ ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पाधिकरणम्— २ ॥

याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥

---

१ मांस्विति जै० न्या० पा० ।

२ नाश्च येति सू० पा० ।

३ इदं सूत्रं केषुचिद्भाष्यपुस्तकेषु न दृश्यते ।

१ सोमक्रयसाधनानामजादीनां समुच्चयाधिकरणम्— ३ ॥

**क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ॥ ५ ॥ समुच्चयो वा प्रयोगे द्रव्यसमवायात् ॥ ६ ॥ समुच्चयंश्च दर्शयति ॥ ७ ॥**

१ उपयजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणम्— ४ ॥

**संस्कारे च तत्प्रधानत्वात् ॥८॥**

१ आधाने विविधसंख्याकानां दक्षिणानां विकल्पाधिकरणम्— ५ ॥

---

१ इदं सूत्रं भाष्ये वृत्तिग्रन्थे च न दृश्यते ।

संख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् ॥ ९ ॥

१ पशुगणेषु जाघनीनां विकल्पाधि०—६॥

द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥ द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥ कपालेऽपि तथेति चेत् ॥ १२ ॥ न कर्मणः परार्थत्वात् ॥ १३ ॥ प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ कृतेऽपि

१ रं च पू इति वृ० पा० ।

पूर्ववत्त्वात्[1]स्यात् ॥ १५ ॥ विकल्पे त्वर्थकर्म नियमप्रधानत्वात्[2] ॥ १६ ॥ शेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १७ ॥

१ उखायां काम्येन नित्याग्नेर्विकाराधिकरणम्—७ ॥

उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १८ ॥ असति चासंस्कृतेषु कर्म स्यात् ॥ १९ ॥ तस्य च देवतार्थत्वात् ॥ २० ॥ विकारो वा

१ वत्त्वात्स्येति जै० न्या० कृत्सम्मतः पाठः ।

२ विकल्पे इत्यादि कर्म स्यादित्यन्तमेकं सूत्रं नीरयादिकमस्यादिति जै० न्या० कृत्सम्मतः पाठः ।

तदुक्तहेतुः ॥२१॥ वचनादसंस्कृतेषु कर्म स्यात् ॥२२॥ संसर्गे चापि दोषः स्यात् ॥२३॥ वचनादिति चेत्॥२४॥तथेतरस्मिन्॥२५॥उत्सर्गे अपि परिग्रहः कर्मणः कृतत्वात्॥२६॥

१वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम् ८॥

स आहवनीयः स्यादाहुतिसंयोगात् ॥२८॥अन्यो वोद्धृत्याहरणात् ।२८।

१ तस्याधानिकसंस्काराभावाधिकरणम्–९॥

तस्मिन्संस्कारकर्म शिष्टत्वात् २९॥ स्थानाद्वा परिलुप्येरन् ॥ ३० ॥

---

१ त्सर्गेपीति जै० न्या० पा०।

२ द्धृत्य हेति बृ० पा०।

१नित्यस्योख्यस्याग्नेरधारणाधिकरणम्—१०॥

**नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् ॥ ३१ ॥ नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ ३२ ॥**

१ सत्रे शुक्रस्पर्शादीनामेककर्तृकत्वाधिकरणम्—११ ॥

**परार्थान्येको यजमानगणे॥ ३३ ॥**

१ अहीने शुक्रस्पर्शादौ यस्य कस्याचिद्यजमानस्य कर्तृत्वाधिकरणम्—१२ ॥

**अनियमोऽविशेषात् ॥ ३४ ॥**

१ सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वाधिकरणम्—१३ ॥

**मुख्यो वाऽविप्रतिषेधात् ॥ ३५ ॥**

१ सत्रेऽञ्जनादिसंस्काराणां सर्वगामित्वाधिकरणम्—१४ ॥

सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३६ ॥ आम्नायवचनाच्च ॥ ३७ ॥ सर्वे वा तदर्थत्वात् ॥ ३८ ॥ गृहपतीरिति च समाख्या सामान्यात् ॥ ३९ ॥

१ याजमानार्त्विज्ययोरार्त्विज्यस्यैव बलवत्त्वाधिकरणम्—१५ ॥

विप्रतिषेधे परम् ॥ ४० ॥ हौत्रे परार्थत्वात् ॥ ४१ ॥ वचनं परम् ॥ ४२ ॥

१ ब्राह्मणस्यैवार्त्विज्याधिकाराधि०—१६ ॥

प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्या-

१ इदमेतदग्रिममधिकरणं च मिलित्वैकमधिकरणं इति केचिन्मते ।

त् ॥ ४३॥ स्मृतेर्वा स्याद्ब्राह्मणानाम् ॥ ४४ ॥ फलचमसविधानाच्चेतरेषाम् ॥ ४५ ॥ सान्नाय्येप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ४६॥ चतुर्धाकरणे च निर्देशात् ॥ ४७ ॥ अन्वाहार्ये च दर्शनात् ॥४८॥१६ ॥ १७ ॥ ॐ ॥

इति श्रीमज्जैमिनिमहर्षिप्रणीते पूर्वमीमांसादर्शने द्वादशस्याध्यायस्य (विषयभेदेन याज्यापुरोनुवाक्याविकल्पसमुच्चयादिविचारो नाम ) चतुर्थः पादः ॥ १२ ॥ ४ ॥ संपूर्णो द्वादशोऽध्यायः ॥ १२ ॥ पूर्वमीमांसादर्शनं सम्पूर्णम्॥

---

शुभमस्तु ॥

---

१ चैषोऽस्तोमेति जै० न्या० पा० ।

श्रीरस्तु ।

श्रीव्यासप्रणीतं

# वेदांतदर्शनम् ।



श्रीकृष्णदासात्मज-गङ्गाविष्णुना
स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९८२, शकाब्दाः १८४७.

कल्याण-मुंबई.

ॐ

॥ श्रीगुरुभ्यो नमः ॥

# शारीरकमीमांसा-दर्शनम् ।



(१)-अथाऽतो ब्रह्मजिज्ञासा ॥१॥ (२)जन्माद्यस्य यतः॥२॥(३)—शास्त्रयोनित्वात् ॥ ३ ॥ (४)—तत्तु सम-

---

१ वल्लभाचार्याणां मते "जन्माद्यस्य यतः ॥ २ ॥ शास्त्रयोनित्वात्" ॥ ३ ॥ इतिसूत्राभ्यामेकमधिकरणम् ।

न्वयात् ॥ ४ ॥(५)-ईक्षतेर्नाऽशब्दम् ॥ ५ ॥ गौणश्चेन्नाऽऽत्मशब्दात् ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ हेयत्वाऽवचनाच्च ॥ ८ ॥ स्वाप्ययात् ॥ ९ ॥ गतिसामान्यात् ॥ १० ॥ श्रुतत्वाच्च ॥ ११ ॥ (६)-आनन्दमयोऽभ्यासात् ॥ १२ ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥ तद्धेतुव्यपदेशाच्च ॥ १४ ॥ मान्त्रवर्णिकमेव च गीयते[१] ॥ १५ ॥ नेतरोऽनुपपत्तेः १६

---

१ वल्लभाचार्याणां मते गीयत इत्यस्य स्थाने गम्यत-इति क्वचित्पाठान्तरम्।

भेदव्यपदेशाच्च ॥ १७ ॥
कामाच्च नाऽनुमानापेक्षा ॥ १८ ॥
अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥
(७) अन्तस्तद्धर्मोपदेशात् ॥ २० ॥
भेदव्यपदेशाच्चाऽन्यः ॥ २१ ॥ (८)-
आकाशस्तल्लिङ्गात् ॥ २२ ॥ (९)-
अत एव प्राणः ॥ २३ ॥ (१०) ज्यो[1]-
तिश्चरणाऽभिधानात् ॥ २४ ॥ छन्दो-
भिधानान्नेति चेन्न तथा चेतोऽर्पणनि-
गदात्तथा हि दर्शनम् ॥ २५ ॥ भूता-

१ मध्वाचार्याणां मते उक्तस्यैवास्य सूत्रस्यैकाधिकरणत्वम् ।

ऽऽदिपादव्यपदेशोपपत्तेश्चैवम् ॥२६॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥ ( ११ )-प्राणस्तथाऽनुगमात् ॥ २८ ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥ जीवमुख्यप्राणलिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥(११)अथाऽत्र एकत्रिंशत्॥

इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याऽध्यायस्य प्रथमः पादः ॥ १ ॥ १ ॥

(१)-सर्वत्र प्रसिद्धोपदेशात् ॥ १॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ शब्दविशेषात् ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥ (२)-अत्ता चराचरग्रहणात्॥९॥प्रकरणाच्च॥१०॥(३)-गुहां प्रविष्टावात्मा-

---

१ वल्लभाचार्याणां मते इत आरभ्यान्यदधिकरणम् ।

नौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥ (४)-अन्तर उपपत्तेः ॥ १३ स्थानादिव्यपदेशाच्च ॥ १४ ॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥ (५)-अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ न च स्मार्त्तमतद्धर्माऽभिलापात् ॥ १९ ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ (६) अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२

रूपोपन्यासाच्च ॥ २३ ॥ (७)-वै-
श्वानरस्साधारणशब्दविशेषात् ॥ २४ ॥
स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥
शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति
चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरु-[1]
षमपि चैनमधीयते ॥ २६ ॥ अत
एव न देवता भूतञ्च ॥ २७ ॥ सा-
क्षादप्यविरोधं जैमिनिः ॥ २८ ॥ अ-
भिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ अ-
नुस्मृतेर्बादरिः ॥ ३० ॥ सम्पत्तेरिति
जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

---

१ पुरुषविधमपीति द्वैतिनां पाठः ।

आमनन्ति चैनमस्मिन् ॥३२॥ (७) सर्वत्र द्वात्रिंशत् ।

इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याऽध्यायस्य द्वितीयः पादः ॥ १ ॥ २॥

---

(१)—द्युभ्वाद्यायतनं स्वशब्दात् १॥ मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ नानुमानमतच्छब्दात् ॥ ३ ॥ प्राणभृच्च ॥ ४ ॥ भेदव्यपदेशात् ॥ ५ ॥ प्रकरणात् ॥ ६ ॥ स्थित्यदनाभ्यां च ॥ ७ ॥ (२)-भूमासम्प्रसादादध्युपदेशात् ॥८॥ धर्मोपपत्तेश्च॥९॥(३)-अ-

क्षरमम्बरान्तधृतेः ॥ १० ॥ सा च प्रशासनात् ॥ ११ ॥ अन्यभावव्यावृत्तेश्च ॥१२॥(४)-ईक्षतिकर्मव्यपदेशात्सः ॥१३॥(५)-दहरउत्तरेभ्यः ॥१४॥ गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च ॥ १५ ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥प्रसिद्धेश्च ॥१७॥ इतरपरामर्शात्स इति चेन्नासम्भवात् ॥१८॥ (६)-उत्तराच्चेदाविर्भूतस्वरूपस्तु॥१९॥अन्यार्थश्च परामर्शः ॥२० अल्पश्रुतेरिति चेत्तदुक्तम्[1]॥२१॥(७)-

१ द्वैतिनां मते एतदन्तं दहराधिकरणम् ।

अनुकृतेस्तस्य च ॥ २२ ॥ अपि च स्मर्यते ॥२३॥(८)-शब्दादेव प्रमितः ॥ २४ ॥ हृद्यपेक्षया तु मनुष्याऽधिकारत्वात्॥२५॥(९)-तदुपर्यपि बादरायणस्सम्भवात् ॥ २६ ॥ विरोधः कर्मणीति चेन्नानेकप्रातिपत्तेर्दर्शनात् ॥ २७ ॥ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षाऽनुमानाभ्याम् ॥२८॥ अत एव च नित्यत्वम् ॥ २९॥ समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो द-

१ द्वैतिनां मते चकाररहितः पाठः क्वचिद्दृश्यते ।

र्शनात्स्मृतेश्च ॥ ३० ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः॥३१॥ ज्योतिषि भावाच्च ॥ ३२ ॥ भावं तु बादरायणोऽस्ति हि ॥३३॥(१०)-शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिंगात्॥ ३५ ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च॥३८॥(११)कम्पनात्॥३९॥ (१२)-ज्योतिर्दर्शनात् ॥४०॥ (१३)-

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ॥ ४१ ॥(१४)-सुषुप्त्युत्क्रान्त्योर्भेदेन ॥४२॥पत्यादिशब्देभ्यः॥४३। (१४) द्युभ्वाद्यायतनं त्रिचत्वारिंशत् ॥

इति वैयासिक्यां शारीरकमीमांसायां प्रथमस्याऽध्यायस्य तृतीयः पादः ॥१ ॥ ३ ॥

---

( १ )-आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ तदधीनत्वादर्थवत् ॥ ३ ॥

---

१ द्वैतिनां मते इदमेकमेव सूत्रं पृथगधिकरणम् ।

ज्ञेयत्वावचनाच्च ॥ ४ ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ महद्वच्च ॥ ७ ॥ (२)—चमसवदविशेषात् ॥ ८ ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ (३) न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥ ज्योतिषैकेषामसत्यन्ने १३

१ जैमिनी मते प्रकरणादिति पृथक् सूत्रम् ।
२ जैमिनी मते इत आरभ्य द्वितीयमधिकरणम् ।

( ४ )-कारणत्वेन[1] चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १४ ॥ समाक[2]र्षात् ॥ १५ ॥ (५)-जगद्वाचित्वात् ॥ १६ ॥ जीवमुख्यप्राणलिंगान्नेति[3] चेत्तद्व्याख्यातम् ॥ १७ ॥ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ (६)-वाक्यान्वयात् १९ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

---

१ द्वैतिनां मते इत आरभ्य काशकृत्स्न इत्यन्तमेकमधिकरणम् ।

२ इत आरभ्य पञ्चमाधिकरणं द्वैतिनां मते ।

३ वल्लभाचार्याणां मतेऽङ्गादिति चेत्तद्व्याख्यातमिति पाठः ॥ द्वैतिनां मते ऽङ्गादीति चेन्न तद्व्याख्यातमिति पाठः ।

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ (७)-प्रकृतिश्च प्रति-ज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥
अभिध्योपदेशाच्च ॥ २४ ॥
साक्षाच्चोभयाऽऽम्नायात् ॥ २५ ॥
आत्मकृतेः परिणामात् ॥ २६ ॥
योनिश्च हि गीयते ॥ २७ ॥

---

१ द्वैतिनां मते इत आरभ्य हीयते इत्यन्तमेकमधि-करणम् ।

२ आत्मकृतेरित्येकं परिणामादित्यपरं सूत्रमिति सूत्रद्वयं विशिष्टाद्वैतिनां मते ।

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ (७)-आनुमानिकमष्टाविंशतिः ॥

इति वैयासिक्यां शारीरकमीमांसायां
प्रथमस्याऽध्यायस्य चतुर्थः पादः ॥१-४॥
समाप्तोऽध्यायश्च ।

---

## अथ द्वितीयोऽध्यायः ॥

(१)-स्मृत्यनवकाशदोषप्रसंग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसंगात् ॥ १ ॥ इतरेषाञ्चाऽनुपलब्धेः ॥ २ ॥

---

१ इदमेकमेव सूत्रं पृथगधिकरणं सर्वव्याख्याननामकं हैतिना विशिष्टाद्वैतिनां च मते ।

(२)एतेन योगःप्रत्युक्तः[1]२(३)-न विलक्षणत्वादस्य तथात्वं च शब्दात्[2]॥४॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥ दृश्यते तु[3] ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात्॥ ७ ॥ अपीतौ तद्वत्प्रसंगादसमञ्जसम् ॥ ८॥ न तु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्ष-

---

१ प्रत्युक्त इत्यन्तेन प्रथमाधिकरणसमाप्तिर्द्वैतिनां मते ।

२ एतत्सूत्रस्याग्रे ' दृश्यते तु ' इति द्वैतिनां मते एकं सूत्रमधिकं पठ्यते तेनैवाधिकरणसमाप्तिश्च ।

३ द्वैतिनां मते इतोऽधिकरणान्तरारम्भः ।

४ द्वैतिनां मते दृश्यते चेति पाठोऽनेनैवाधिकरणसमाप्तिश्च ।

दोषाच्च ॥१० ॥ तर्काप्रतिष्ठानादप्य-
न्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्र-
संगः ॥ ११ ॥ (४)-एतेन शिष्टापरि-
ग्रहा अपि व्याख्याताः ॥१२॥ (५)-
भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्
॥१३ (६)-तदनन्यत्वमारम्भणशब्दा-
दिभ्यः॥१४॥भावे चोपलब्धेः॥१५॥

---

१ विशिष्टाद्वैतिनां मते तर्काप्रतिष्ठानादपीत्येकमन्यशिष्ट-मपरं सूत्रमिति ज्ञेयम् । द्वैतिनां मते ष्ठानादन्यथाप्यनुमेयेति पाठः ।

२ असदितीत्यारभ्यैतदन्तं चतुर्थमधिकरणं द्वैतिनां मते ।

सत्त्वाच्चावरस्य ॥ १६ ॥ असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्यशेषात्॥१७॥युक्तेःशब्दान्तराच्च ॥१८॥ पटवच्च ॥ १९ ॥ यथा च प्राणादि ॥ २० ॥ (७)-इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ अधिकं तु भेदनिर्द्देशात् ॥२२॥अश्मादिवच्च तदनुपपत्तिः॥२३॥(८)-उपसं-

१ चापरस्येति पाठो विशिष्टाद्वैतिनां मते ।

२ युक्तेःशब्दान्तराच्चेत्यग्रिमसूत्रेण सहेदमेकमेव सूत्रं विशिष्टाद्वैतिनां मते ।

३ चरहितः पाठो द्वैतिनां मते ।

४प्राणादिरिति पाठो विशिष्टाद्वैतिनां क्वचिद् द्वैतिनां च मते।

ह्रारदर्शनान्नेति चेन्न क्षीरवद्धि॥ २४॥ देवादिवदपि लोके ॥ २५ ॥ (९)-कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा॥२६॥श्रुतेस्तुशब्दमूलत्वात्२७। आत्मनि चैवं विचित्राश्च हि॥ २८॥ स्वपक्षदोषाच्च॥२९॥(१०)—सर्वोपेता च तद्दर्शनात् ॥३०॥विकरणत्वान्नेति चेत्तदुक्तम् ॥३१॥(११)-न प्रयोजनवत्त्वात् ॥३२॥लोकवत्तु लीलाकैवल्यम् ॥३३॥(१२)—वैषम्यनैर्घृण्ये न सापे-

१ इत आरभ्य विकरणत्वोति सूत्रपर्यन्तं विशिष्टाद्वैतिनां मत एकमधिकरणम् ।

२इतरव्यपदेशात्यारभ्यैतदन्तमेकमाधिकरणं द्वैतिनां मते ।

क्षत्वात्तथा हि दर्शयति ॥ ३४ ॥ न कर्माऽविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥ उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥ (१२)–सर्वधर्म्मोपपत्तेश्च ॥ ३७ ॥(१३) स्मृतिस्सप्तत्रिंशत् ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याऽध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

---

(१)-रचनानुपपत्तेश्च नाऽनुमानम् ।१।

---

१ न कर्म विभेति वल्लभाचार्यमते पाठः ।

२ विशिष्टाद्वैतिनां मते द्वात्रिंशत्तमसूत्रमारभ्य यावत्पादसमाप्ति एकमेवाधिकरणम् ।

प्रवृत्तेश्च ॥ २ ॥ पयोऽम्बुवच्चे-
त्तत्रापि ॥ ३ ॥ व्यतिरेकानवस्थिते-
श्चाऽनपेक्षत्वात् ॥ ४ ॥ अन्यत्राऽभा-
वाच्च न तृणादिवत् ॥ ५ ॥ अभ्यु-
पगमेऽप्यर्थाभावात् ॥ ६ ॥ पुरुषाऽ-
श्मवदिति चेत्तथाऽपि ॥ ७ ॥ अंगि-
त्वाऽनुपपत्तेश्च॥८ ॥अन्यथाऽनुमितौ

---

१ इदं सूत्रं विशिष्टाद्वैतिनां मते नास्ति ।

२ एतदन्तं द्वैतिनां मत आद्यमधिकरणम् ।

३ द्वैतिनां मते इदमेकमेव सूत्रं तृतीयमधिकरणम् । इदं सूत्रं विशिष्टाद्वैतिनां मतेन्यथानुमितौ चेति सूत्रोत्तरं पठ्यते।

४ तद्भाष्ये तत्सूत्रवृत्तौ च क्रमेण तत्रापीति, तथापीति च द्वैतिनां मते पाठभेदो दृश्यते ।

५ इत आरभ्य द्वैतिनां मतेऽधिकरणमन्यत् ।

च ह्रशक्तिवियोगात् ॥ ९ ॥ विप्रति-षेधाच्चाऽसमञ्जसम् ॥ १० ॥ (२)-महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ (३)-उभयथाऽपि न कर्माऽतस्तदभावः ॥ १२ ॥ समवायाऽभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥ नित्यमेव च भावात् ॥ १४ ॥ रूपाऽऽदिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥ उभयथा च[2] दोषात् ॥ १६ ॥ अपरि-

---

१ इत आरभ्यापरिग्रहेति सूत्रपर्यन्तमेकमधिकरणं द्वैतिनां विशिष्टाद्वैतिनां च मते ।

२ उभयथापि च दोषेति वल्लभाचार्यमते पाठः ।

महाञ्चाऽत्यन्तमनपेक्षा ॥ १७ ॥(४)-
समुदाय उभयहेतुकेऽपि तदप्रा
प्तिः ॥ १८ ॥ इतरेतरप्रत्ययत्वादिति[1]
चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥
उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥
असति प्रतिज्ञोपरोधो यौगपद्यमन्य
था[2] ॥ २१ ॥ प्रतिसंख्याऽप्रतिसंख्या-
निरोधाप्राप्तिराविच्छेदात् ॥ २२ ॥
उभयथा च दोषात् ॥ २३ ॥ आकाशे

---

१ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावा-
निमित्तत्वादिति । एतत्सूत्रस्य पाठो विशिष्टाद्वैतिनां मते ।
२ अन्यथा चेति विशिष्टाद्वैतिनां मते पाठः ।

चाऽविशेषात् ॥ २४ ॥ अनुस्मृ-
तेश्च ॥ २५ ॥ ना[1]ऽसतोऽदृष्टत्वात् ।२६।
उदासीनानामपि चैवं सिद्धिः ॥२७॥
(५)—नाऽभाव उपलब्धेः ॥२८॥
वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥
न भावोऽनुपलब्धेः ॥ ३० ॥ [2]क्षणिक-
त्वाच्च ॥ ३१ ॥ सर्वथाऽनुपपत्तेश्च[3] ।३२।
(६)-नैकस्मिन्नसम्भवात् ॥३३॥ एव-

---

१ इत आरभ्य न स्वप्नादिवदित्यन्तमेकमधिकरणं द्वैतिनां मते ।

२ इदं सूत्रं विशिष्टाद्वैतिनां नये नास्ति ।

३ अनेनैकेनैव सूत्रेण विशिष्टाद्वैतिनां मते एकमधिकरणम् । द्वैतिनां मते एतदन्तमधिकरणम् ।

आत्माऽकात्स्न्र्यम् ॥ ३४ ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥ (७)-पत्युरसामञ्जस्यात् ॥ ३७ ॥ सम्बन्धानुपपत्तेः ॥ ३८ ॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥ करणवच्चेन्न भोगाऽदिभ्यः ॥ ४० ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥ (८)-उत्पत्त्यसम्भवा-

---

१ शेषादिति पञ्चम्यन्तपाठो द्वैतिनां मते ।

२ इदं सूत्रं विशिष्टाद्वैतिनां मते नास्ति ।

३ पत्तेश्चेति चरहितः पाठो द्वैतिनां नये ।

त्॥४२॥ न च कर्तुः करणम्॥४३॥ विज्ञानादिभावे वा तदप्रतिषेधः॥४४॥ विप्रतिषेधाच्च ॥४५॥ (८)—रचनाऽनुपपत्तेः पञ्चचत्वारिंशत् ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याऽध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

(१)-न[1] वियदश्रुतेः ॥ १॥ अस्ति तु ॥ २ ॥ गौण्यसम्भवात् ॥ ३ ॥ शब्दाच्च ॥ ४ ॥ स्याच्चैकस्यापि[2] ब्रह्म

१ आदितोऽसम्भवस्तु सेति सूत्रपर्यन्तमेकमाधिकरणं विशिष्टाद्वैतिनां मते ।

२ स्याच्चैकस्य ब्रह्मशब्दवदिति विशिष्टाद्वैतिनां मते पाठः।

शब्दवत् ॥ ५ ॥ प्रतिज्ञाहानिरव्यति-
रेकाच्छब्देभ्यः[1] ॥ ६ ॥ यावद्विकारं
तु विभागो लोकवत्[2] ॥ ७ ॥ (२)
एतेन मातरिश्वा[3] व्याख्यातः ॥ ८ ॥
( ३ )-असम्भवस्तु सतोऽनुपपत्तेः ९
( ४ )-तेजोऽतस्तथा ह्याह ॥ १० ॥
(५)-आपः ॥११॥ ( ६ )-पृथिव्यधि-[4]
काररूपशब्दाऽन्तरेभ्यः[5] ॥१२ ॥ (७)

१ शब्देभ्य इति पृथक् सूत्रं विशिष्टाद्वैतिनां मते ।
२ एतदन्तमाद्यमाधिकरणं द्वैतिनां मते ।
३ तरिश्वापीति द्वैतिन नये पाठः ।
४ पृथिवीत्येतावन्मात्रं पृथक् सूत्रं विशिष्टाद्वैतिनां मते ।
५ शब्दान्तरादिभ्य इति द्वैतिनां मते पाठः ।

तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥ (८) विपर्य्ययेण तु क्रमोऽत [1]उपपद्यते च ॥ १४ ॥ (९)-[2]अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाऽविशेषात् ॥ १५ ॥ (१०)-[3]चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥ (११)-[4]नात्माऽश्रु[5]ते-

१ चराहितः पाठो वल्लभाचार्याणां नये ।

२ एतदादिसूत्रद्वयं द्वैतिनां मते एकमधिकरणम् ।

३ तेजोत इति सूत्रमारभ्य एतत्सूत्रपर्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

४ इदमेकमेव सूत्रमेकमधिकरणं विशिष्टाद्वैतिनां मते।

५ विशिष्टाद्वैतिनां मते श्रुतेरिति पदच्छेदः । न नञः प्रश्लेषः ।

नित्यत्वाच्च ताभ्यः ॥ १७॥ (१२)-ज्ञोऽत एवं ॥ १८ ॥ ( १३ )-उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ स्वाऽऽत्मना चोत्तरयोः ॥ २० ॥ नाऽणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् २१ ॥ स्वशब्दोन्मानाभ्यां च ॥२२॥ अविरोधश्चन्दनवत् ॥ २३ ॥ अवस्थितिवैशेष्यादिति चेन्नाऽभ्युपगमाद्धृदि हि ॥ २४ ॥ गुणाद्वाऽऽलोकवत्॥२५॥ व्य[२]तिरेको गन्धवत् ॥ २६ ॥ तथा

१ एतत्सूत्रोत्तरं युक्तेश्चेत्येकं सूत्रमाधिकं द्वैतिनां मते।

२ अग्रिमसूत्रेण सहायमेको योगो द्वैतिनां मते । तथैव तन्मते चेत्यस्य स्थाने हीति पाठः क्वचित्। इत आरभ्याधिकरणान्तरारम्भश्च तन्मते।

च दर्शयति ॥ २७ ॥ पृथगुपदेशात्[1] ॥ २८ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२९॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३० ॥ पुंस्त्वादिवत्त्वस्य सतोऽभि[2]व्यक्तियोगात् ॥३१॥ नित्यो[3]पलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥ (१४)- कर्ता शास्त्रार्थवत्त्वात् ॥ ३३॥ [4]विहा-

---

१ इदमेकमेव सूत्रमेकमधिकरणं द्वैतिनां मते ।

२ अभीति पदरहितः पाठो वल्लभाचार्याणां मते ।

३ ज्ञोऽत इति सूत्रमारभ्यैतत्सूत्रपर्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

४ अग्रिमसूत्रेण सह विपर्ययेणोपादानाद्विहारोपदेशादित्यैकयोगतया विशिष्टाद्वैतिनां मते पाठः ।

रोपदेशात् ॥ ३४ ॥ उपादानात् ॥३५॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥ उपलब्धिवदनियमः ॥ ३७ ॥ शक्तिविपर्ययात् ॥ ३८ ॥ समाध्यभावाच्च ॥ ३९ ॥ (१५)–यथा च तक्षोभयथा ॥४०॥ (१६)–परात्तु तच्छ्रुतेः ॥ ४१ ॥कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥ (१७)–अंशो

१ कर्त्ता शास्त्रार्थवत्त्वादिति सूत्रमारभ्यैतत्सूत्रपर्यन्तमेकमाधिकरणं विशिष्टाद्वैतिनां मते ।

२ कर्त्ता शास्त्रेत्याद्येतत्सूत्रान्तमेकमाधिकरणं द्वैतिनां मते

३ प्रतिषेधावैयर्थ्यादिति द्वैतिनां मते पाठः ।

नानाव्यपदेशादन्यथा चाऽपि दाश-
कितवादित्वमधीयत एके ॥ ४३ ॥
मन्त्रवर्णाच्चं ॥ ४४ ॥ अपि चं स्मर्यते
॥ ४५॥ प्रकाशादिवन्नैवं परः॥४६॥
स्मरन्ति च ॥४७ ॥ अनुज्ञापरिहारौ
देहसम्बंधाज्ज्योतिरादिवत् ॥ ४८ ॥
असन्ततेश्चाऽव्यतिकरः ॥ ४९ ॥
आभास एव च॥ ५० ॥ अँदृष्टानिय-

---

१ चरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च मते ।
२ चरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च मते ।
३ शादिवास्विति विशिष्टाद्वैतिनां नये तुशब्दसहितः पाठः ।
४ इत आरभ्यान्याधिकरणं द्वैतिनां मते ।

मात् ॥ ८१ ॥ अभिसन्ध्यादि-ष्वपि चैवम् ॥ ८२ ॥ प्रदेशा-[1]दिति चेन्नाऽन्तर्भावात् ॥८३॥ (१७) न वियदश्रुतेरिति प्रश्नात् ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याध्यायस्य तृतीयः पादः॥ २॥३ ॥

(१)-तथा प्राणाः ॥ १ ॥ गौण्यस-म्भवात्[2] ॥२॥ तत्प्राक्छ्रुतेश्च[3] ॥ ३ ॥

१ प्रदेशभेदादिति चेदिति भेदशब्दसहितः विशिष्टाद्वैतिनां मते पाठः ।

२ एतत्सूत्रोत्तरं "प्रतिज्ञानुपरोधाच्च" इति सूत्रमेक-माधिकतया पठ्यते द्वैतिभिः तथैतदन्तमाद्यमाधिकरणं तेषां मते ।

३ एतत्सूत्रमात्रमेकमाधिकरणं द्वैतिनां मते ।

तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ ( २ )-सप्त-गतेर्विशेषितत्वाच्च ॥ ५ ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥(३)-अणवश्च ॥ ७ ॥(४)-श्रेष्ठश्च ॥ ८ ॥ ( ५ )-न वायुक्रिये पृथगुपदेशात्[1] ॥ ९ ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति[2] ॥११॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥ ( ६ )-अणुश्च ॥ १३ ॥ ( ७ )-ज्यो

१ एतदन्तं द्वैतिनां मते चतुर्थाधिकरणम् ।
२ एतदन्तमिदमधिकरणं द्वैतिनां मते ।

तिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥ प्राणवता शब्दात् ॥ १५ ॥ तस्य च नित्यत्वात् ॥ १६ ॥ (८)-त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ भेदश्रुतेः ॥ १८ ॥ वैलक्षण्याच्च ॥ १९ ॥ (९)-संज्ञामूर्तिकॢप्तिस्तु[2] त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥ (९)—तथा प्राणा द्वाविंशतिः ॥

---

१ अग्निमसूत्रेण सहैकयोगोऽयं विशिष्टाद्वैतिनां मते ।

२ इदमकमेव सूत्रमेकमधिकरणं द्वैतिनां मते ।

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयस्याऽध्यायस्य चतुर्थः पादः ॥२॥४॥ समाप्तोऽध्यायश्च ॥



## ॥ अथ तृतीयोऽध्यायः ॥

(१)-तदनन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २॥ प्राणगतेश्च ॥ ३ ॥ अग्न्यादिगतिश्रु-

---

१ इत आरभ्य यथेत्थमनेयं चेत्यन्तं नवसूत्रः पृथक्पृथक् नवाधिकरणानि द्वैतिनां मते ॥

तेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥ (२)-कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ सुकृतदुष्कृते

१ यथेतमनेवं चेत्येतन्मात्रं पृथक् सूत्रं द्वैतिनां मते ।

एवेति तु बादरिः ॥ ११ ॥ (३)-अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ स्मरन्ति च ॥ १४ ॥ अपि च[1] सप्त ॥ १५ ॥ तत्राऽपि च[2] तद्व्यापारादविरोधः ॥ १६ ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ न तृतीये तथोपलब्धेः ॥ १८ ॥ स्मर्यतेऽपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥

१ चरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च नये एतदादिसूत्रत्रयं पृथक्पृथगधिकरणं द्वैतिनां मते ।

२ चरहितः पाठो विशिष्टाद्वैतिनां नये ।

तृतीयशब्दाऽवरोधस्संशोकजस्य ।२१
( ४ )-तत्साभाव्यापत्तिरुपपत्तेः ॥
॥ २२ ॥ ( ५ )-नातिचिरेण विशे-
षात् ॥२३ ॥( ६ )-अन्याधिष्ठिते पू-
र्व्ववदभिलापात् ॥ २४ ॥ अशुद्ध-
मिति चेन्न शब्दात् ॥ २५ ॥
रेतस्सिग्योगोऽथ ॥ २६ ॥ योने-
श्शरीरम् ॥२७॥(६)—तदनन्तरप्राति-
पत्तौ सप्तविंशतिः ॥

---

१ तृतीये इति सप्तम्यन्तपाठो द्वैतिनां मते क्वचित् ।
२ तत्स्वाभाव्येति विशिष्टाद्वैतिनां द्वैतिनां च मते पाठः।
३ इदं सत्रमेकमधिकरणं द्वैतिनां मते ।

इति वैयासिक्यां शारीरकमीमां-
सायां तृतीयस्याऽध्यायस्य
प्रथमः पादः ॥ ३ ॥ १ ॥

(१) सन्ध्ये सृष्टिराह हि ॥ १ ॥ निर्म्मातारं चैके पुत्राऽऽदयश्च ॥२॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्त-स्वरूपत्वात्॥ ३॥सूचकश्च हि श्रुतेरा-चक्षते च तद्विदः ॥ ४ ॥ पराऽभि-

---

१ देहयोगाद्वा सोपीति सूत्रोत्तरमेवास्य सूत्रस्य पाठो विशिष्टाद्वैतिनां नेय । एतत्सूत्रान्तं द्वैतिनां मते आद्यमधिकरणम् ।

२ एतदारभ्य मुग्धेऽर्धसम्पत्तिरिति सूत्रान्तं पृथक्पृथगधिकरणं द्वैतिनां मते प्रतिसूत्रम् ।

ध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥ देहयोगाद्वा सोऽपि ॥ ६ ॥ (२)-तदभावो नाडीषु तच्छ्रुतेरात्मनि च[1] ॥ ७ ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥ (३)-स एव तु[2] कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ ( ४ )-मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ ( ५ )-न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ न[3] भेदादि-

---

१ चेत्यस्य स्थाने 'ह' इति पाठो द्वैतिनां नये ।

२ त्वित्यस्य स्थाने चेति पाठो द्वैतिनां नये ।

३ नशब्दरहितः पाठो विशिष्टाद्वैतिनां मते ।

ति चेन्न प्रत्येकमतद्वचनात् ॥ १२॥
अपि चैवमेके ॥ १३ ॥ अरूपवदेव
हि तत्प्रधानत्वात् ॥ १४ ॥ प्रका-
शवच्चाऽवैयर्थ्यात् ॥ १५ ॥ आह च
तन्मात्रम् ॥ १६ ॥ दर्शयति चाऽथो
अपि स्मर्य्यते ॥ १७ ॥ अत एव
चोपमा सूर्य्यकादिवत् ॥ १८ ॥
अम्बुवदग्रहणात्तु न तथात्वम् ॥१९॥
वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसाम-

१ एतदाद्यापि स्मर्यत इत्यन्तमेकमाधिकरणं द्वैतिनां मते ।
२ यर्थ्यमिति द्वैतिनां नये पाठः ।
३ अग्रिमसूत्रेण सहायमेकयोगो विशिष्टाद्वैतिनां मते ।
इत अधिकरणान्तरारम्भो द्वैतिनां मते ।
४ भाक्तेति द्वैतिनां मते पाठः ।

अस्यादेवम् ॥२०॥ दर्शनाच्च ॥२१॥ (६)-प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ तदव्यक्तमाह हि ॥ २३ ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥ प्रकाशा[2]दिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ अतो[3]ऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

---

१ इत आरभ्याधिकरणान्तरं द्वैतिनां मते ।

२ प्रकाशवेति द्वैतिनां मते पाठः । तथा प्रकाशवच्चावैशेष्यमित्येतावन्मात्रं पृथक् सूत्रं तन्मते ।

३ एतत्सूत्रपर्यन्तं पञ्चमाधिकरणं विशिष्टाद्वैतिनां मते ।

उभयव्यपदेशात्त्वहिकुण्डलवत् ।२७।
प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥
पूर्ववद्वा ॥ २९ ॥ प्रतिषेधाच्च॥३०॥
( ७ ) परमतस्सेतून्मानसम्बन्धभे-
दव्यपदेशेभ्यः ॥ ३१ ॥ सामान्यात्तु[2]
॥ ३२ ॥ बुद्ध्यर्थः पादवत् ॥३३॥
स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥

---

१ इत आरभ्याधिकरणान्तरं द्वातमे मते ।

२ एतत्सूत्रस्य स्थाने " दर्शनात् " इति सूत्रपाठं वृत्तिनः कुर्वन्ति ।

३ इतरसूत्रद्वयेनाधिकरणान्तरं द्वैतिभे मते ।

उपपत्तेश्च ॥ ३५ ॥ तथान्यप्रतिषेधात् ॥ ३६ ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥ (८)-फलमत उपपत्तेः ॥ ३८ ॥ श्रुतत्वाच्च ॥ ३९ ॥ धर्मं जैमिनिरत एव ॥ ४० ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥ (९)-सन्ध्ये सृष्टिरेकचत्वारिंशत् ॥

इति वैयासिक्यां शारीरकमीमांसायां तृतीयस्याऽध्यायस्य
द्वितीयः पादः ॥ ३ ॥ २ ॥

---

१ न्यात्प्रतिषेधेति द्वैतिनां मते पाठः। तथेदं सूत्रमग्रिमसूत्रं चैकैकमधिकरणमिति हे अधिकरणे द्वैतिनां नये।

(१)-सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ भेदान्नेति[1] चेन्नैकस्यामपि ॥ २ ॥ स्वाध्यायस्य तथात्वेन हि[2] समाचारेऽधिकाराच्च सववच्च[3] तन्नियमः ॥ ३ ॥ दर्शयति च ॥ ॥ ४ ॥ (२)-उपसंहारोऽर्थाभेदाद्वि-

---

१ भेदादिति चेन्नैकेति नेति शब्दं विहाय पाठो द्वैतिनां मते ।

२ तथात्वे हीति विशिष्टाद्वैतिनां नये पाठः ।

३ सववच्चेत्यस्य स्थाने सलिलवच्चेति पठित्वा सलिलवच्च तन्नियम इत्यस्य पृथक् सूत्रत्वं द्वैतिन अभ्युपगच्छन्ति ।

४ एतत्सूत्रान्तं प्रथममधिकरणं विशिष्टाद्वैतिनां मते । एतत्सूत्रमारभ्य तु तदपीत्यन्तमेकमधिकरणं द्वैतिनां मते

धिशेषवत्समाने च ॥ ५ ॥ (३)-अं-
न्यथात्वं शब्दादिति चेन्नाविशेषा-
त् ॥ ६ ॥ न वा प्रकरणभेदात्परो-
वरीयस्त्वादिवत् ॥ ७ ॥ संज्ञातश्चे-
त्तदुक्तमस्ति तु तदपि ॥ ८ ॥ (४)-
व्याप्तेश्च समञ्जसम् ॥ ९ ॥ (५)-स-
र्वाभेदादन्यत्रेमे ॥ १० ॥ (६)-आन-

---

१ अन्यथात्वं च शब्देति चशब्दसहितः द्वैतिनां मते पाठः ।

२ प्राप्तेश्च सेत्यादि पाठो द्वैतिनां नये । तथाऽन्यथात्वमिति सूत्रमारभ्यैतत्सूत्रान्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

न्दादयः प्रधानस्य ॥ ११ ॥ प्रियं-शिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥१२॥ इतरे त्वर्थसामान्यात्॥१३॥ ( ७)-आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ आत्मशब्दाच्च ॥ १५ ॥ ( ८ )-आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ अन्वयादिति चेत्स्यादव-धारणात् ॥ १७ ॥ ( ९ )-कार्या-ख्यानादपूर्वम् ॥ १८ ॥ ( १० ) स-

१ इतस्सूत्रद्वयं पृथक् पृथगधिकरणद्वयं द्वैतिनां नये ।

२ इदमेकमेव सूत्रमेकमधिकरणं द्वैतिनां नये । तथाऽऽनन्दादय इति सूत्रमारभ्यैतत्सूत्रान्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

मान एवं चाभेदात् ॥१९॥ (११)-सम्बन्धादेवमन्यत्रापि ॥ २० ॥ न वा विशेषात् ॥२१॥ दर्शयति च ॥२२॥ (१२)-सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ (१३)-पुरुषविद्यायामिव[2] चेतरेषामनाम्नानात् ॥ २४ ॥ (१४)-वेधाद्यर्थभेदात् ॥ २५ ॥ (१५)-हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥२६ ॥ (१६)-

---

१ पूर्वसूत्रसहितेनानेन सूत्रेणैकमधिकरणं द्वैतिनां मते।

२ यामपि चेतेति द्वैतिनां मते पाठः।

साम्पराये[1] तर्त्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥ छन्दत[2] उभयाऽविरोधात् ॥ २८ ॥ (१७)-गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥२९ ॥ उप[3]पन्नस्तल्लक्षणाऽर्थोपलब्धेर्लोकवत् ॥ ३० ॥ ( १८ )-अनियमः सर्वेषा[4]मविरोधश्शब्दानुमानाभ्याम् ॥ ३१ ॥ ( १९ )-यावदधिकारमवस्थितिराधि-

---

१ पूर्वसूत्रसहितेनानेन सूत्रेणैकमधिकरणं द्वैतिनां मते ।

२ इत आरभ्य सूत्रत्रयेणैकमधिकरणं द्वैतिनां मते ।

३ एतत्सूत्रोत्तरं यावदधिकेति सूत्रस्य ततोऽनियमस्येत्यादीनां सूत्राणां विशिष्टाद्वैतिनां मते पाठः ।

४ सर्वासामविरोधाच्छब्देति पाठान्तरम् ।

कारिकाणाम् ॥ ३२ ॥ (२०)-अक्षरधियां त्व[1]वरोधस्सामान्यतद्भावाभ्यामौपस-दवत्तदुक्तम् ॥ ३३ ॥ ( २१ )-इय[2]-दामननात् ॥ ३४ ॥ (२२)-अन्तरा[3] भूतग्रामवत्स्वात्मनः[4] ॥ ३५ ॥ अ-न्यथा भेदानुपपत्तिरिति चेन्नोपदे[5]-

---

१ त्वाविरोधेति द्वैतिनां मते पाठः । पूर्वसूत्रसाहि तेनानेन सूत्रेणैकमाधिकरणं द्वैतिनां मते ।

२ पूर्वसूत्रसाहितेनानेनैकमाधिकरणं विशिष्टाद्वैतिनां नये ।

३ उत्तरसूत्रेण सहायमेको योगो विशिष्टाद्वैतिनां मते । तथा सत्यादय इत्यन्तमन्तराधिकरणं तन्मते ।

४स्वात्मन इत्यस्य स्थानेतदुक्तमिति द्वैतिनां मते पाठः ।

५ पदेशवदित्यन्तरपदरहितः विशिष्टाद्वैतिनां द्वैतिनां च मते पाठः । प्राक् सूत्रद्वयसाहितेनानेन सूत्रेणैकमाधिकरणं द्वैतिनां मते ।

शान्तरवत् ॥ ३६ ॥ (२२)-व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ (२३)-सैव हि सत्यादयः ॥ ३८ ॥ (२४)-कांमादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥ (२६)-आदरादलोपः ॥ ४० ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥ (२७)-तन्निर्धारणांऽनियमस्तद्दृष्टेः पृथग्घ्यप्रति-

१ कामादितरेति द्वैतिनां मते पाठः । तथैत आरभ्य सूत्रत्रयेणैकमाधिकरणमेतन्मते ।

२ कामादीत्यत एतदन्तं विशिष्टाद्वैतिनां मते एकमधिकरणम् ।

३ रणार्थनियेति द्वैतिनां मते पाठः ।

बन्धः फलम् ॥ ४२ ॥ (२८) प्रदानवदेव तदुक्तम् ॥४३॥ (२९) लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि॥४४॥[1] पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ४५ ॥ अतिदेशाच्च[2] ॥४६॥ विद्यैव[3] तु निर्धारणात् ॥ ४७ ॥ दर्शनाच्च ॥ ४८ ॥ श्रुत्यादिबलीय-

---

१ अनेनैकेनैव सूत्रेणैकमाधिकरणं विशिष्टाद्वैतिनां द्वैतिनां च मते ।

२ पूर्वसूत्रसहितेनानेन सूत्रेणैकमाधिकरणं द्वैतिनां मते ।

३ अग्रिमसूत्रेण सहायमेको योगो विशिष्टाद्वैतिनां मते । उत्तरसूत्रसहितेनानेन सूत्रेणैकमाधिकरणं द्वैतिनां मते ।

४ अनेनैकेनैव सूत्रेणैकमाधिकरणं द्वैतिनां मते ।

स्त्वाच्च न बाधः ॥४९॥ अनुबन्धा-
दिभ्यः प्रज्ञान्तरपृथक्त्ववद्[2]दृष्टश्च त-
दुक्तम् ॥ ५०॥ न सामान्यादप्युपल-
ब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥
परेण च शब्दस्य ताद्विध्यं भूयस्त्वा-
त्त्वनुबन्धः ॥ ५२ ॥ ( ३० )-एक
आत्मनश्शरीरेभावात् ॥५३॥व्यति-
रेकस्तद्भावाभावित्वान्न तूपलब्धिवत्
॥ ५४ ॥ ( ३१ )-अङ्गावबद्धास्तु न
शाखासु हि प्रतिवेदम् ॥५५॥मन्त्रा-

---

१ अनुबन्धादिभ्यइति पृथक् सूत्रं द्वैतिनां मते । इत आरभ्य परेणच शब्देत्यन्तेनैकैकेन सूत्रेणैकैकमधिकरणं द्वैतिनां मते।

२ वदद्दृष्टिश्च तेति द्वैतिनां मते पाठः ।

द्विद्वाऽविरोधः ॥ ५६ ॥ ( ३२ )-भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ ( ३३ )-नानाशब्दाऽऽदिभेदात् ॥ ५८ ॥ ( ३४ )-विकल्पोऽविशिष्टफलत्वात् ५९॥(३५)-काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६०॥ (३६)-अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ शिष्टेश्च ॥ ६२ ॥ समाहारात् ॥ ६३ ॥गुण-

१ ल्पोविशीति द्वैतिनां मते पाठः।

२ पूर्वसूत्रमिदं चेति सूत्रद्वयेनैकमाधिकरणं विशिष्टाद्वैतिनां मते।

३ भावादिति वल्लभाचार्याणां मते पाठः ।

४अङ्गेष्वित्यारभ्यैतत्सूत्रपर्यन्तमेकमाधिकरणं द्वैतिनां मते ।

साधारण्यश्रुतेश्च ॥ ६४॥न वा तत्स-हभावाश्रुतेः ॥ ६५ ॥ दर्शनाच्च ॥ ६६ ॥ ( ३६ )-सर्ववेदान्तप्रत्ययं षट्षष्टिः ॥

इति वैयासिक्यां शारीरकमीमांसायां तृतीयस्याऽध्यायस्य तृतीयः पादः ॥ ३ ॥ ३॥

---

( १)-पुरुषार्थोऽतश्शब्दादितिबा-दरायणः ॥ १ ॥ शेषत्वात्पुरुषार्थ-वादो यथान्येष्विति जैमिनिः ॥ २ ॥ आचारदर्शनात् ॥ ३॥ तच्छ्रुतेः॥४॥ समन्वारम्भणात् ॥ ५॥ तद्वतो विधा-

नात् ॥ ६ ॥ नियमाच्च[1] ॥ ७॥ अधि-
कोपदेशात्तु बादरायणस्यैवं तद्दर्श-
नात् ॥ ८ ॥ तुल्यन्तु दर्शनम् ॥ ९ ॥
[2]असार्वत्रिकी ॥ १० ॥ विभागश्श-
तवत् ॥ ११ ॥ अध्ययनमात्रवतः
॥ १२ ॥ ना[3]ऽविशेषात् ॥ १३ ॥
स्तुत[4]येऽनुमतिर्वा ॥ १४ ॥ कामका-
रेणचैके ॥ १५ ॥ उपमर्दं च ॥१६॥

---

१ विशिष्टाद्वैतिनां मते चशब्दरहितः पाठः ।

२ इत आरभ्य द्वितीयमधिकरणं द्वैतिनां मते ।

३ इदमेकमेव सूत्रमेकमाधिकरणं द्वैतिनां मते ।

४ इत आरभ्य सहकारित्वेन चेति सूत्रान्तमेकमधिकर-णं द्वैतिनां मते ।

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ (२)-
परामर्शं जैमिनिरचोदना चाऽपवदति
हि ॥ १८ ॥ अनुष्ठेयं बादरायणस्सा-
म्यश्रुतेः ॥ १९ ॥ विधिर्वा धारणवत्
॥ २० ॥ ( ३ )-स्तुतिमात्रमुपा-
दानादिति चेन्नापूर्वत्वात् ॥ २१ ॥
[1]भावशब्दाच्च ॥ २२ ॥ ( ४ )-पारि-
प्लवार्था इति चेन्न विशेषितत्वात्
॥ २३ ॥ तथा [2]चैकवाक्यतोपबन्धात्
॥ २४ ॥ ( ५ )-अत एव चाग्नीन्ध-

१ इदं सूत्रं नास्ति वल्लभाचार्याणां मते ।
२ चरहितः पाठो वल्लभाचार्याणां मते ।

नाद्यनपेक्षा ॥ २५ ॥ (६)-सर्वा[1]पेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषा[2]मवश्यानुष्ठेयत्वात् ॥ २७ ॥ (७)-सर्व्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥२८॥ अबाधाच्च ॥२९॥ अपि च[3] स्मर्यते ॥३०॥ शब्दश्चातोऽकामका[4]रे ॥३१॥ (८)-विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

---

१ अनेनैकनैव सूत्रेणैकमधिकरणं विशिष्टाद्वैतिनां मते ।
२ पामप्यावश्येति विशिष्टाद्वैतिनां मते पाठः ।
३ चशब्दराहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च मते ।
४ स्वारे इति द्वैतिनां मते पाठः ।

सहकारित्वेन च ॥ ३३ ॥ सर्वथा[1]-
ऽपि त एवोभयलिंगात् ॥ ३४ ॥ अन-
भिभवं च दर्शयति ॥ ३५ ॥ (९)-
अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥
अपि च[2] स्मर्यते ॥ ३७ ॥ विशेषा-
नुग्रहश्च[3] ॥ ३८ ॥ अतस्त्वितर[4]-
ज्ज्यायो लिंगाच्च ॥ ३९ ॥ (१०)-
तद्भूतस्य तु[5] नातद्भावो जैमि-

---

१ सर्वथापि तु इति तुशब्दसहितः पाठो द्वैतिनां मते । तथा नियमाऽतद्रूपाभावेभ्य इत्यन्तमेकमधिकरणं द्वैतिनां मते

२ चशब्दरहितः पाठो विशिष्टाद्वैतिनां द्वैतिनां च मते ।

३ नुग्रह चेति द्वैतिनां मते पाठः ।

४ तरज्ज्येति द्वैतिनां मते पाठः ।

५ तु तद्भाव इति 'नाऽ' इत्येतद्रहितः पाठो द्वैतिनां मते ।

नेरपि नियमात्तद्रूपाऽभावेभ्यः॥४०॥ (११)-न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥उपपूर्वमपि[1] त्वेके भावमशनवत्तदुक्तम्॥४२ (१२) बहिस्तूभयथापि स्मृतेराचाराच्च[3]॥४३ ( १३ )-[4]स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ आर्त्विज्य-

१ मपीत्यके पतेति विशिष्टाद्वैतिनां मते पाठः ।

२ मपीत्येके भावशमनवत्तेति द्वैतिनां मते पाठः ।

३ तद्भूतस्येत्यारभ्यैतदन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

४ इत आरभ्य विद्यादिवदित्यन्तमेकमधिकरणं द्वैतिनां मते।

मित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥ श्रुतेश्च ॥ ४६ ॥ (१४)-सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥ (१५)-अनाविष्कुर्वन्नन्वयात्॥५०॥ (१६)-ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥ (१७)-एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदव-

१ इदं सूत्रं विशिष्टाद्वैतिनां द्वैतिनां च मते नास्ति।
२ इत आरभ्य पृथगधिकरणं द्वैतिनां मते।

स्याऽवधृतेः ॥ ५२ ॥ ( १७ ) पुरु-
षार्थौ द्विपञ्चाशत् ॥

इति वैयासिक्यां शारीरकमीमांसायां
तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥
समाप्तस्तृतीयोऽध्यायः ॥

---

## अथ चतुर्थोऽध्यायः ।

(१)-आवृत्तिरसकृदुपदेशात् ॥ १ ॥
लिंगाच्च ॥ २ ॥ ( २ )-आत्मेति तू-
पगच्छन्ति ग्राहयन्ति च ॥ ३ ॥
( ३ ) न[1] प्रतीकेन हि सः ॥ ४ ॥

---

१ अग्रिमसूत्रेण सहैकमधिकरणं विशिष्टाद्वैतिनां मते ।

( ४ )-ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ ( ५ )-आदित्यादिमतयश्चांग उपपत्तेः ॥ ६ ॥ ( ६ )-आसीनः सम्भवात् ॥ ७ ॥ ध्यानाच्च ॥ ८ ॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥ स्मरंति च ॥ १० ॥ ( ७ )-यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ ( ८ )-आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥ ( ९ )-तद[3]धिगम उत्तरपूर्वाघयोर-

---

१ इत आरभ्य त्राविशेषादित्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां द्वैतिनां च मते ।

२ आ प्रायणात्तत्र हि दृष्टमिति विशिष्टाद्वैतिनां मते पाठः ।

३ इत आरभ्य पादसमाप्त्यन्तमेकमधिकरणं द्वैतिनां मते ।

श्लेषाविनाशौ तद्व्यपदेशात् ॥ १३ ॥ ( १० )-इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ ( ११ )-अनारब्धकार्यें एव तु पूर्वें तदवधेः ॥ १५ ॥( १२ )-अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥ १६ ॥ अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥ ( १३ )-यदेव विद्ययेति हि ॥१८ ॥ ( १४ )-भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९॥

---

१ स्वाथ सम्भेति विशिष्टाद्वैतिनां मते पाठः । स्वाथ सम्पत्स्यते इति द्वैतिनां मते पाठः ।

(१४) आवृत्तिरष्टादश ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याऽध्यायस्य प्रथमः पादः॥ ४ ॥ १ ॥

---

(१)-वाङ्मनसि दर्शनाच्छब्दाच्च[1] ॥ १ ॥ अत एव च सर्वाण्यनु ॥ २ ॥ (२)-तन्मनः प्राण उत्तरात् ॥ ३ ॥ सोऽध्यक्षे[2] तदुपगमादिभ्यः ॥ ४ ॥ भूतेष्वतः[3] श्रुतेः ॥ ५ ॥ (३)-नैकस्मिन्

---

१ चशब्दरहितः पाठो विशिष्टाद्वैतिनां मते ।

२ अनेनैकेनैव सूत्रेणैकमधिकरणं द्वैतिनां मते ।

३ इत आरम्भाधिकरणान्तरं विशिष्टाद्वैतिनां मते ।

दर्शयतोहि ॥ ६ ॥ ( ४ )-समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ ( ५ )-तदापीतेस्संसारव्यपदेशात् ॥ ८ ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ नोपमर्देनातः ॥ १० ॥ अस्यैव चोपपत्तेरेष[2] ऊष्मा ॥ ११ ॥ ( ६ )-प्रतिषेधादिति[3] चेन्न शारीरात् ॥ १२ ॥ स्पष्टो[4] ह्येकेषाम्

---

१ इत आरभ्य स्मर्यते चेत्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां मते ।

२ एष इति पदरहितः पाठो विशिष्टाद्वैतिनां मते ।

३ अग्रिमसूत्रेण सहैकयोगोयं विशिष्टाद्वैतिनां च मते ।

४ इत आरभ्य दक्षिणे इत्यन्तमेकमधिकरणं द्वैतिनां मते ।

॥ १३ ॥ स्मर्य्यते च ॥ १४ ॥ (७)-तानि परे तथा ह्याह ॥ १५ ॥ (८)-अविभागो वचनात् ॥ १६ ॥ (९)-तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ॥ १७ ॥ (१०)-रश्म्यनुसारी ॥ १८ ॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति

---

१ अनेनैकेनैव सूत्रेणैकमधिकरणं विशिष्टाद्वैतिनां मते ।

२ अनेनैकेनैव सूत्रेणैकमधिकरणं विशिष्टाद्वैतिनां मते ।

निशि नेति चेन्न सम्बन्धादिति पृथक् सूत्रं द्वैतिनां मते ।

च ॥ १९ ॥ (११)-अतश्चायनेऽपि हि दक्षिणे ॥ २० ॥ योगिनः प्रति चं स्मर्यते स्मार्ते चैते ॥२१॥(११) वागेकविंशतिः ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

---

(१)-अर्चिरादिना तत्प्रथितेः ॥ १ ॥ (२)-वायुशब्दादविशेषाभ्याम् ॥ २ ॥ (३)-तडितोधिव-

---

१ प्रतिस्मर्यते इति चशब्दरहितः पाठो विशिष्टाद्वैतिनां मते ।

रुण सम्बन्धात् ॥ ३ ॥ ( ४ )-आ-
तिवाहिकस्तल्लिङ्गात् ॥ ४ ॥ [1]उभय-
व्यामोहात्तत्सिद्धेः ॥ ५ ॥ वैद्युते-
नैव ततस्तच्छ्रुतेः ॥ ६ ॥ ( ५ )-
[2]कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥
विशेषितत्वाच्च ॥ ८ ॥ सामीप्यात्तु
तद्व्यपदेशः ॥ ९ ॥ कार्य्यात्यये-
तदध्यक्षेण सहातः परमभिधानात्
॥ १० ॥ स्मृतेश्च ॥ ११ ॥ परं जैमिनि-
र्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ १३ ॥

---

१ अग्रिमसूत्रसहितेनानेनैकमाधिकरणं द्वैतिनां मते ।

२ इदं सूत्रं विशिष्टाद्वैतिनां मते नास्ति ।

न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥
( ६ )-अप्रतीकालम्बनान्नयतीति सबादरायण उभयथा दोषात्तत्क्रतुश्च ॥ १५ ॥ विशेषञ्च दर्शयति ॥ १६ ॥
( ६ )-अर्चिषोडश ॥

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

( १ )-सम्पद्याविर्भावः स्वेन

१ प्रतिपत्त्यभिसन्धिरित्यस्य स्थाने प्रत्याभिसंधिरिति विशिष्टाद्वैतिनां मते पाठः ।

२ उभयथा च दोषेति चशब्दसहितः पाठो विशिष्टा-द्वैतिनां मते ।

३ इत आरभ्य द्वैतिनां मते सूत्रचतुष्टयं पृथक् पृथगधि-करणम् । तथा "सम्पद्याऽविर्भाव स्वेन चेति" द्वैतिनां मते पाठः ।

शब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥ ३ ॥ (२)-अविभागेन दृष्टत्वात् ॥ ४ ॥ (३)-ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ (४)-सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ अत एव चानन्याधिपतिः ॥ ९[1] ॥ (५)-अ[2]-

---

१ अनेनैकेनैव सूत्रेणैकमधिकरणं द्वैतिनां मते ।

२ इत आरभ्य विष्कृतं हीत्यन्तमेकमधिकरणं विशिष्टाद्वैतिनां द्वैतिनां च मते ।

भावं बादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ भावे जाग्रद्वत् ॥ १४ ॥ (६)-प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ (७)-जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वा-

---

१ इत आरभ्यैकोनविंशतितमाधिकारोऽति सूत्रान्तमेकमाधिकरणं द्वैतिनां मत ।

च्च ॥ १७॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ विकारावर्ति च तथा हि[1] स्थितिमाह[2] ॥ १९ ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ २२ ॥ ॐ (७)-सम्पद्य द्वाविंशतिः ॥

---

१ हि दर्शयतीति द्वैतिनां मते पाठः ।

२स्थितिमाह दर्शयत्यादिरित्यग्रिमसूत्रपाठो द्वैतिनां मते। अग्रिमसूत्रेण सहैकमधिकरणं च तन्मते ।

इति वैयासिक्यां शारीरकमीमांसायां चतुर्थस्याऽध्यायस्य चतुर्थः पादः ॥ ४ ॥

## समाप्तश्चतुर्थोऽध्यायः ॥ ४ ॥



ॐ

समाप्तं शारीरकमीमांसादर्शनम् ॥

'हरिः' ॐ तत्सत् ॥

---

(१) इत्येतन्मध्यगता अङ्का अधिकरणानामद्वैतमतानुसारेणेति ज्ञेयम् ॥

श्रीरस्तु ।

श्रीगौतममहर्षिप्रणीतं

# न्यायदर्शनम् ।

श्रीकृष्णदासात्मज-गङ्गाविष्णुना

स्वकीयं "लक्ष्मीवेंकटेश्वर" मुद्रणालये

मुद्रयित्वा प्रकाशितम् ।

संवत् १९८२, शकाब्दाः १८४७.

कल्याण-मुंबई.

अथ

श्रीगौतममहर्षिप्रणीतं

# न्यायदर्शनम् ।



प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसि-
द्धान्तावयवतर्कनिर्णयवादजल्पवित-
ण्डाहेत्वाभासच्छलजातिनिग्रहस्था-
नानां तत्त्वज्ञानान्निःश्रेयसाधिगमः १
दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामु-
त्तरोत्तरापाये तदनन्तरापायादपवर्गः २
प्रत्यक्षानुमानोपमानशब्दाः (प्रमा-

णानि ) ॥ ३ ॥ १ ॥ इन्द्रियार्थस-
न्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभि-
चारि व्यवसायात्मकं (प्रत्यक्षम्)॥४॥
अथ तत्पूर्व्वकं( त्रिविधमनुमानं )पूर्व-
वच्छेषवत्सामान्यतो दृष्टं च ॥ ५ ॥
प्रसिद्धसाधर्म्यात्साध्यसाधनम् ( उप-
मानम् ) ॥६ ॥ आप्तोपदेशः (शब्दः)
॥ ७ ॥( सद्विविधो ) दृष्टादृष्टार्थत्वा-
त् ॥ ८ ॥ २ ॥ आत्मशरीरेन्द्रिया-
र्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुः
खापवर्गास्तु ( प्रमेयम् )॥९॥ इच्छा-
द्वेषप्रयत्नसुखदुःखज्ञानानि ( आत्मनो

लिङ्गम्) इति ॥ १० ॥ चेष्टेन्द्रियार्थाश्रयः (शरीरम्) ॥ ११ ॥ घ्राणरसनचक्षुस्त्वक्छ्रोत्राणि (इन्द्रियाणि) भूतेभ्यः ॥ १२ ॥ पृथिव्यापस्तेजोवायुराकाशमिति (भूतानि) ॥१३॥ गन्धरसरूपस्पर्शशब्दाः (पृथिव्यादिगुणाः) तदर्थाः ॥ १४ ॥ (बुद्धिः) उपलब्धिर्ज्ञानमित्यनर्थान्तरम्। १५। युगपज्ज्ञानानुत्पत्तिः (मनसो लिङ्गम्) ॥१६ ॥(प्रवृत्तिः) वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥ प्रवर्त्तनालक्षणा (दोषाः) ॥१८॥ पुनरुत्पत्तिः

( प्रेत्यभावः ) ॥ १९ ॥ प्रवृत्तिदोष-जनितोऽर्थः ( फलम् ) ॥ २० ॥ बाधनालक्षणं ( दुःखम् ) इति ॥ २१ ॥ तद-त्यन्तविमोक्षः(अपवर्गः) ॥ २२ ॥ ३ ॥ समानानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुप-लब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषा-पेक्षो विमर्शः ( संशयः ) ॥ २३ ॥ यमर्थमधिकृत्य प्रवर्त्तते तत् ( प्रयो-जनम् ) ॥ २४ ॥ लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स ( दृष्टा-न्तः ) ॥२५ ॥ ४ ॥ तन्त्राधिकरणा-भ्युपगमसंस्थितिः(सिद्धान्तः) ॥२६॥

सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसं-
स्थित्यर्थान्तर ( रा )भावात् ॥२७॥
सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः
( सर्वतन्त्रसिद्धान्तः ) ॥२८॥ समा-
नतन्त्रसिद्धः परतन्त्रासिद्धः ( प्रतित-
न्त्रसिद्धान्तः ॥ २९ ॥ यत्सिद्धाव-
न्यप्रकरणसिद्धिस्सः ( अधिकरणसि-
द्धान्तः )॥३०॥ अपरीक्षिताभ्युपग-
मात्तद्विशेषपरीक्षणम् ( अभ्युपगमसि-
द्धान्तः ) ॥ ३१ ॥ ५ ॥ प्रतिज्ञाहे-
तूदाहरणोपनयनिगमनानि ( अवय-
वाः ) ॥ ३२॥ साध्यनिर्देशः ( प्रति-

ज्ञा ) ॥ ३३॥ उदाहरणसाधर्म्यात्सा-
ध्यसाधनं ( हेतुः )॥ ३४ ॥ ( तथा )
वैधर्म्यात् ॥ ३५ ॥ साध्यसाधर्म्यात्त-
द्धर्म्मभावी दृष्टान्त(उदाहरणम्) ३६॥
तद्विपर्ययाद्वा ( विपरीतम् ) ॥३७ ॥
उदाहरणापेक्षस्तथेत्युपसंहारो नतथेति
वा साध्यस्य ( उपनयः ) ॥ ३८ ॥-
हेत्वपदेशात्प्रातिज्ञायाः पुनर्वचनं( नि-
गमनम् ) ॥ ३९ ॥ ६ ॥ अविज्ञात-
तत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञाना-
र्थमूहः ( तर्कः ) ॥ ४० ॥ विमृश्य

पक्षप्रतिपक्षाभ्यामर्थावधारणं ( निर्णयः ) ॥ ४१ ॥

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने प्रथमस्याध्यायस्य प्रथममाह्निकम् ॥ १ ॥ १ ॥
सप्रयोजनाभिधेय ( १ ) प्रमाणलक्षण ( २ ) प्रमेयलक्षण ( ३ ) न्यायपूर्वाङ्ग ( ४ ) न्यायसिद्धान्त ( ५ ) न्यायस्वरूप ( ६ ) न्यायोत्तराणि ( ७ ) इति सप्त प्रकरणान्यत्राह्निके ॥

---

प्रमाणतर्कसाधनोपालम्भस्सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो ( वादः ) ॥ १ ॥ यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाध-

नोपालम्भो ( जल्पः )॥२॥ स्वप्रति- पक्षस्थापनाहीनो (वितण्डा) ॥३॥१॥ सव्यभिचारविरुद्धप्रकरणसमसाध्यस- मातीतकाला ( हेत्वाभासाः ) ॥ ४ ॥ अनैकान्तिकः ( सव्यभिचारः ) ॥५॥ सिद्धान्तमभ्युपेत्य तद्विरोधी ( विरु- द्धः ) ॥ ६॥ यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः(प्रकरणसमः )॥७॥ साध्याविशिष्टस्साध्यत्वात् ( साध्यस- मः )॥८॥कालात्ययापदिष्टः (काला- तीतः ॥९॥२ ॥ वचनविघातोऽर्थवि- कल्पोपपत्त्या (छलम् )॥१०॥ ( तत्-

त्रिविधं)वाक्छलं सामान्यच्छलमुपचा-
रच्छलं चेति ॥ ११ ॥ अविशेषाभि-
हितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्प-
नो ( वक्छालम् )॥१२॥ सम्भवतो-
ऽर्थस्यातिसामान्ययोगादसम्भूतार्थक-
ल्पना ( सामान्यच्छलम् ) ॥ १३ ॥
धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध
( उपचारच्छलम् ) ॥ १४॥ वाक्छ-
लमेवोपचारच्छलं तदविशेषात्॥१५।
( न तदर्थान्तरभावात् ॥ १६ ॥)अवि
शेषे वा किञ्चित्साधर्म्यादेकच्छलप-

संगः ॥ १७ ॥ ३ ॥ साधर्म्यवैधर्म्या-भ्यां प्रत्यवस्थानं( जातिः)॥ १८॥ वि-प्रतिपत्तिरप्रतिपत्तिश्च(निग्रहस्थानम्) ॥ १९॥ तद्विकल्पाज्जातिनिग्रहस्था-नबहुत्वम् ॥ २० ॥ ४ ॥

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने प्रथ-मस्याध्यायस्य द्वितीयमाह्निकम् ॥१॥२॥कथा (१) हेत्वाभासः (२) च्छलं ( ३ ) दोषल-क्षणं ( ४ ) चेति चत्वारि प्रकरणान्यत्राह्निके ॥

समाप्तोऽध्यायः प्रथमः।



समानानेकधर्म्माध्यवसायादन्यत-रधर्म्माध्यवसायाद्वा न संशयः ॥ १॥

विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ २ ॥
विप्रतिपत्तौ च सम्प्रतिपत्तेः ॥ ३ ॥
अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्य-
वस्थायाः ॥ ४ ॥ तथाऽत्यन्तसंशय-
स्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥ यथो-
क्ताध्यवसायादेव तद्विशेषापेक्षात्संशये-
नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥
यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसंगः ॥७॥
॥ १ ॥ प्रत्यक्षादीनामप्रामाण्यं त्रैका-
ल्यासिद्धेः ॥ ८ ॥ पूर्वं हि प्रमाण-
सिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षो-
त्पत्तिः ॥ ९ ॥ ( पश्चात्सिद्धौ न

प्रमाणेभ्यः प्रमेयसिद्धिः॥ १०॥ युग-
पत्सिद्धौ प्रत्यर्थनियतत्वात्क्रमवृत्ति-
त्वाभावो बुद्धीनाम् ॥ ११ ॥ )त्रैका-
ल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥१२ ॥
सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधासिद्धिः
॥ १३ ॥ तत्प्रामाण्ये वा न सर्वप्रमा-
णप्रतिषेधः ॥ १४ ॥ त्रैकाल्याप्रति-
षेधश्च शब्दादातोद्यसिद्धिवत्तात्सिद्धेः
॥ १५ ॥ प्रमेयता च तुलाप्रामा-
ण्यवत् ॥ १६ ॥ प्रमाणतस्सिद्धेः
प्रमाणानां प्रमाणान्तरासिद्धिप्रसंगः १७
तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्तत्सि-

द्धिः॥१८॥न प्रदीपप्रकाशसिद्धिवत्त-
त्सिद्धेः ॥ १९ ॥ २ ॥ प्रत्यक्षलक्ष-
णानुपपत्तिरसमग्रवचनात् ॥ २० ॥
नात्ममनसोस्सन्निकर्षाभावे प्रत्यक्षो-
त्पत्तिः ॥ २१ ॥ दिग्देशकालाकाशे-
ष्वप्येवं प्रसंगः ॥ २२ ॥ ज्ञानलिंग-
त्वादात्मनो नानवरोधः ॥ २३॥ तद-
यौगपद्यलिंगत्वान्न मनसः ॥ २४ ॥
प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोस्सन्नि-
कर्षस्य पृथग्वचनम् ॥ २५ ॥ सुप्त-
व्यासक्तमनसाञ्चेन्द्रियार्थस्सन्निकर्षनि-
मित्तत्वात् ॥ २६ ॥ तैश्चापदेशो

ज्ञानविशेषाणाम् ॥२७॥ व्याहतत्वा-
दहेतुः ॥२८॥ नार्थविशेषप्राबल्यात्
।२९। प्रत्यक्षमनुमानमेकदेशग्रहणा-
दुपलब्धेः॥३०॥न प्रत्यक्षेण यावत्ता-
वदप्युपलम्भात् ॥३१॥ न चैकदेशो-
पलब्धिरवयविसद्भावात् ॥३२॥ ३ ॥
साध्यत्वादवयविनि सन्देहः ॥ ३३ ॥
सर्वाग्रहणमवयव्यासिद्धेः ॥ ३४ ॥
धारणाकर्षणोपपत्तेश्च ॥ ३५ ॥ सेना-
वनवदिति चेन्नातीन्द्रियत्वादणूनाम्
॥ ३६ ॥ ४ ॥रोधोपघातसादृश्येभ्यो
व्यभिचारादनुमानमप्रमाणम् ॥३७॥

नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥ ५ ॥ वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३९ ॥ तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥ नातीतानागतयोरितरेतरापेक्षासिद्धिः ॥ ४१ ॥ वर्त्तमानाभावे सर्व्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥ कृतताकर्त्तव्यतोपपत्तेरुभयथा ग्रहणम् ॥ ४३ ॥ ६ ॥ अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥ ४४ ॥ प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥

प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६॥ नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४७ ॥ तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८॥ शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥ उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥ सम्बन्धाच्च ॥५१॥ आप्तोपदेशसामर्थ्याच्छब्दादर्थे सम्प्रत्ययः ॥ ५२॥ पूरणप्रदाहपाठनानुपलब्धेश्च सम्बन्धाभावः ॥ ५३ ॥ शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४॥ न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य॥५५॥

जातिविशेषे चानियमात् ॥ ५६ ॥७ तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५७ ॥ न कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥ अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५९ ॥ अनुवादोपपत्तेश्च ॥ ६० ॥ वाक्यविभागस्य चार्थग्रहणात् ॥ ६१ ॥ विध्यर्थवादानुवादवचनविनियोगात् ॥ ६२ ॥ (विधिः) विधायकः ॥६३॥स्तुतिनिन्दा परकृतिः पुराकल्प इति ( अर्थवादः ) ॥६४॥ विधिविहितस्यानुवचनम् (अनुवादः ) ॥६५॥नानुवादपुनरुक्त-

योर्विशेषः शब्दाभ्यासोपपत्तेः ॥६६॥ शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः॥६७॥मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥६८॥८॥

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने द्वितीयस्याऽध्यायस्य प्रथममाह्निकम् ॥ २॥ १ ॥ संशय ( १ ) प्रमाणसामान्य (२ ) प्रत्यक्ष ( ३ ) ऽवयवा ( ४ ) ऽनुमान ( ५ ) वर्तमान ( ६ ) शब्दसामान्य ( ७ ) शब्दविशेष( ८ ) परीक्षेत्यत्राह्निकेऽष्टौ प्रकरणानि ॥

---

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥ १॥ शब्द ऐतिह्यान-

र्थान्तरभावादनुमानेऽर्थापत्तिसम्भवा-
भावानामनर्थान्तरभावाच्चाप्रतिषेधः ॥
॥ २॥अर्थापत्तिरप्रमाणमनैकान्तिक-
त्वात् ॥३॥ अनर्थापत्तावर्थापत्त्यभि-
मानात् ॥४॥ प्रतिषेधाप्रामाण्यंचानै-
कान्तिकत्वात् ॥ ५ ॥ तत्प्रामाण्ये
वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥ ना-
भावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥
लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां
तत्प्रमेयसिद्धिः ॥ ८ ॥ असत्यर्थे ना
भाव इति चेन्नान्यलक्षणोपपत्तेः ॥९॥
तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥ न

लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥ प्रागुत्पत्तेरभावोपपत्तेश्च॥ १२ ॥१॥ आदिमत्त्वादैन्द्रियकत्वात् कृतकव-दुपचाराच्च ॥ १३ ॥ न घटाभावसा-मान्यनित्यत्वान्नित्येष्वप्यनित्यवदुप-चाराच्च ॥ १४ ॥ तत्त्वभाक्तयोर्नाना-त्वस्य विभागादव्यभिचारः ॥ १५ ॥ सन्तानानुमानविशेषणा(षा)त् ॥ १६ ॥ कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् ( नित्येष्वप्यव्यभिचार इति )॥ १७॥ प्रागुच्चारणादनुपलब्धेरावरणाद्यनुप-लब्धेः ॥ १८ ॥ तदनुपलब्धेरनुप-लम्भादावरणोपलब्धिः ॥ १९ ॥ अनु-

पलम्भादप्यनुपलब्धिसद्भाववत्तावर-
णानुपपत्तिरनुपलम्भात् ॥२० ।अनुप-
लम्भात्मकत्वादनुपलब्धेरहेतुः ॥२१।
अस्पर्शत्वात् ॥ २२ ॥ न कर्मानि-
त्यत्वात् ॥ २३ ॥ नाणु नित्यत्वात्
॥ २४ ॥ सम्प्रदानात् ॥ २५ ॥ त-
दन्तरालानुपलब्धेरहेतुः ॥ २६ ॥
अध्यापनादप्रतिषेधः ॥ २७ ॥
उभयोः पक्षयोरन्यतरस्याध्यापनाद-
प्रतिषेधः ॥ २८ ॥ अभ्यासात्
॥ २९ ॥ नान्यत्वेऽप्यभ्यासस्यो-
पचारात ॥ ३० ॥ अन्यदन्यस्मा-

दनन्यत्वादनन्यदित्यन्यताऽभावः ॥ २१ ॥ तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षासिद्धेः ॥ २२ ॥ विनाशकारणानुपलब्धेः ॥ २३ ॥ अश्रवणकारणानुपलब्धेस्सततश्रवण-प्रसङ्गः ॥ २४ ॥ उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ २५ ॥ पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ २६ ॥ अस्पर्शत्वादप्रतिषेधः ॥ २७ ॥ विभक्त्यन्तरोपपत्तेश्च स समासे ॥ २८॥४॥ विकारादेशोपदेशात् संशयः ॥ २९ ॥

प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४० ॥
न्यूनसमाधिकोपपत्तेर्विकाराणामहे-
तुः ॥ ४१ ॥ नातुल्यप्रकृतीनां वि-
कारविकल्पात् ॥ ४२ ॥ द्रव्यविकारे
वैषम्यवद्वर्णविकारविकल्पः ॥ ४३ ॥ न
विकारधर्मानुपपत्तेः ॥ ४४ ॥ विकारप्रा-
प्तानामपुनरावृत्तेः ॥ ४५ ॥ सुवर्णादीनां
पुनरापत्तेरहेतुः ॥ ४६ ॥ न तद्विकारा-
णां सुवर्णभावाव्यभिचारात् ॥ ४७ ॥
नित्यत्वे विकारादनित्यत्वे चानवस्था-
नात् ॥ ४८ ॥ नित्यानामतीन्द्रि-
यत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणाम-

प्रतिषेधः ॥ ४९॥ अनवस्थायित्वे च वर्णोपलब्धिवत्तदुपपत्तिः ॥ ५० ॥ विकारधर्मित्वे नित्यत्वाभावात्कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः॥५१॥ प्रकृत्यनियमात् ॥ ५२ ॥ अनियमे नियमान्नानियमः ॥ ५३ ॥ नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५४ ॥ गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः॥ ५५ ॥२ ॥ ते विभक्त्यन्ताः(पदम्)॥५६। तदर्थे व्यक्त्या-

कृतिजातिसन्निधावुपचारात् संशयः ॥ ५७ ॥या शब्दसमूहत्यागपरिग्रह-सङ्ख्यावृद्ध्यपचयवर्णसमासानुब-न्धानां व्यक्तावुपचाराद्व्यक्तिः॥५८॥ न तदनवस्थानात् ॥ ५९ ॥ सहचरणस्थानतादर्थ्यवृत्तमानधारणसामी-प्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्च-कटराजसक्तुचन्दनगंगाशाटकान्नपुरुषे-ष्वतद्भावेऽपि तदुपचारः ॥ ६० ॥ आकृतिस्तदपेक्षत्वात् (सत्त्वव्यवस्था-नसिद्धेः ) ॥ ६१ ॥ व्यक्त्या-कृतियुक्तेऽप्यप्रसंगात्प्रोक्षणादीनां मृद्ग-

वके जातिः ॥ ६२ ॥ नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६३ ॥ जात्याकृतिव्यक्तयस्तु (पदार्थः)॥६४॥ (व्यक्तिः)गुणविशेषाश्रयो मूर्तिः।६५। (आकृतिः) जातिलिंगाख्या॥६६॥ समानप्रसवात्मिका(जातिः) ६७॥४॥

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने द्वितीयस्याध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥ २ ॥
प्रमाणचतुष्टय (१) शब्दानित्यत्व (२) शब्दपरिणाम (३) शब्दपरीक्षा (४) श्रत्यत्राह्निके चत्वारि प्रकरणानि॥ समाप्तोऽध्यायो द्वितीयः॥



दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥ न विषयव्यवस्थानात् ॥ २ ॥ तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥ १ ॥ शरीरदाहे पातकाभावात् ॥ ४ ॥ तदभावस्सात्मकप्रदाहेपि तन्नित्यत्वात् ॥ ५ ॥ न कार्याश्रयकर्तृवधात् ॥ ६ ॥ २ ॥ सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥ नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥ एकनाशे द्वितीयाविनाशात् ॥ ९ ॥ अवयवनाशेप्यवयव्युपलब्धेरहेतुः ॥ १० ॥

दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥
इन्द्रियान्तरविकारात् ॥ १२ ॥ न
स्मृतेस्स्मर्त्तव्यविषयत्वात् ॥ १३ ॥
तदात्मगुणत्वसद्भावादप्रतिषेधः॥१४॥
अपरिसङ्ख्यानाच्च स्मृतिविषयस्य ॥
१५ ॥ ३ ॥ नात्मप्रतिपत्तिहेतूनां म-
नसि सम्भवात् ॥ १६ ॥ ज्ञातुर्ज्ञान-
साधनोपपत्तेस्संज्ञाभेदमात्रम् ॥१७॥
नियमश्च निरनुमानः ॥ १८ ॥४॥पू-
र्वाभ्यस्तात्स्मृत्यनुबन्धाज्जातस्य हर्ष-
भयशोकसम्प्रतिपत्तेः ॥ १९ ॥ पद्मा-
दिषु प्रबोधसम्मीलनविकारवत्तद्वि-

कारः ॥ २० ॥ नोष्णशीतवर्षाकाल-
निमित्तत्वात् पञ्चात्मकविकाराणाम्
॥ २१ ॥ प्रेत्याहारकृतात् स्तन्या-
भिलाषात् ॥ २२ ॥ अयसोयस्का-
न्ताभिगमनवत्तदुपसर्पणम् ॥ २३ ॥
नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥ वी-
तरागजन्मादर्शनात् ॥ २५ ॥ सगु-
णद्रव्योत्पत्तिवत्तदुत्पत्तिः॥ २६ ॥ न
सङ्कल्पनिमित्तत्वाद्रागादीनाम्॥२७॥
॥५॥पार्थिवं गुणान्तरोपलब्धेः॥२८॥
पार्थिवाप्यतैजसंतद्गुणोपलब्धेः॥२९॥

निश्श्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥ ३० ॥ गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥ ३१ ॥ श्रुतिप्रामाण्याच्च ॥ ३२ ॥ ६ ॥

कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात् संशयः ॥ ३३ ॥ महदणुग्रहणात् ॥ ३४ ॥ रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम् ॥ ३५ ॥ ( तदनुपलब्धेरहेतुः ॥३६॥ नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥३७॥ ) द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३८ ॥ कर्मकारितश्चेन्द्रिया-

णां व्यूहः पुरुषार्थतन्त्रः ॥ ३९ ॥ अव्य-
भिचाराच्च प्रतीघातो भौतिकधर्मः ४०
मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्त-
दनुपलब्धिः ॥ ४१ ॥ न रात्राव-
प्यनुपलब्धेः ॥ ४२ ॥ बाह्यप्रकाशा-
नुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽ-
नुपलब्धिः ॥ ४३ ॥ अभिव्यक्तौ
चाभिभवात् ॥ ४४ ॥ नक्तञ्चरनयन-
रश्मिदर्शनाच्च ॥ ४५ ॥ अप्राप्यग्रहणम्
काचाभ्रपटलस्फटिकान्तरितोपलब्धेः
॥ ४६ ॥ कुड्यान्तरितानुपलब्धेरप्र-
तिषेधः ॥ ४७ ॥ अप्रतीघातात्

सन्निकर्षोपपत्तिः ॥ ४८ ॥ आदित्य-
रश्मेः स्फटिकान्तरेऽपि दाहेऽविघा-
तात् ॥ ४९ ॥ नेतरेतरधर्म्मप्रसंगात्
॥ ५० ॥ आदर्शोदकयोः प्रसा-
दस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः
॥ ५१ ॥ दृष्टानुमितानां नियो-
गप्रतिषेधानुपपत्तिः ॥ ५२ ॥
स्थानान्यत्वं नानात्वा ( द्वयविना-
नात्वा ) द्वयविनानास्थानत्वाच्च सं-
शयः ॥५३॥त्वगव्यतिरेकात्॥५४॥
न युगपदर्थानुपलब्धेः ॥ ५५ ॥
विप्रतिषेधाच्च न त्वगेका ॥ ५६ ॥

इन्द्रियार्थपंचत्वात् ॥ ५७ ॥ न तद-
र्थबहुत्वात् ॥ ५८ ॥ गंधत्वाद्यव्य-
तिरेकाद्गन्धादीनामप्रतिषेधः॥ ५९ ॥
विषयत्वाव्यतिरेकादेकत्वम्॥ ६० ॥
न बुद्धिलक्षणाधिष्ठानगत्याकृतिजा-
तिपंचत्वेभ्यः ॥ ६१ ॥ भूतगुणवि-
शेषोपलब्धेस्तादात्म्यम् ॥ ६२ ॥ ग-
न्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः
पृथिव्याः॥६३॥अप्तेजोवायूनां पूर्वं-
पूर्वमपोह्याकाशस्योत्तरः॥ ६४॥ न
सर्वगुणानुपलब्धेः ॥६५ ॥ एकैकस्यै-
वोत्तरोत्तरगुणसद्भावादुत्तराणां तदनु-

पलब्धिः ॥ ६६ ॥ संसर्गाच्चानेकगुण-
ग्रहणं तिष्ठं ह्यपरं परेण ॥ ६७ ॥ न
पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६८ ॥
पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ।६९।
तद्व्यवस्थानन्तु भूयस्त्वात् ॥ ७० ॥
( सगुणानामिन्द्रियभावात् ॥७१ ॥)
तेनैव तस्याग्रहणाच्च॥७२॥ न शब्द-
गुणोपलब्धेः ॥ ७३ ॥ तदुपलब्धिरि-
तरेतरद्रव्यगुणवैधर्म्यात् ॥ ७४॥ १॥

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने
तृतीयस्याध्यायस्य प्रथममाह्निकम् ॥३॥१ ॥

(१) इन्द्रियभेद (२) देहभेद (३) चक्षुरद्वैत (४) मनोभेदा (५) ऽनादिनिधन (६) शरीरपरीक्षे (७) न्द्रियपरीक्षे (८) न्द्रियनानात्वा (९) ऽर्थपरीक्षेति नव प्रकरणान्यत्र पादे ॥

---

**कर्म्माकाशसाधर्म्यात्संशयः ॥ १ ॥ विषयप्रत्यभिज्ञानात् ॥ २ ॥ साध्यसमत्वादहेतुः ॥ ३ ॥ न युगपद्ग्रहणात् ॥ ४ ॥ अप्रत्यभिज्ञाने च विनाशप्रसंगः ॥ ५ ॥ क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥ अप्रत्यभिज्ञानञ्च विषयान्तरव्यासंगात् ॥ ७ ॥ न गत्यभावा-**

त् ॥ ८ ॥ स्फटिकान्यत्वाभिमानव-
त्तदन्यत्वाभिमानः ॥ ९॥ न हेत्वभा-
वात् ॥ १० ॥ १ ॥ स्फटिकेप्यपरा-
परोत्पत्तेः क्षणिकत्वाद्व्यक्तीनाम-
हेतुः ॥ ११ ॥ ( उपचयापचयप्रबन्ध-
दर्शनाच्छरीरेषु ॥ १२ ॥ ) नियमहे-
त्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ १३॥
नोत्पत्तिविनाशकारणोपलब्धेः॥१४॥
क्षीरविनाशे कारणानुपलब्धिवद्दध्यु-
त्पत्तिवच्च तदुत्पत्तिः ॥ १५॥लिंगतो
ग्रहणान्नानुपलब्धिः॥ १६॥ न पयसः
परिणामगुणान्तरप्रादुर्भावात् ॥१७॥

व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्व-
द्रव्यनिवृत्तेरनुमानम् ॥ १८ ॥ क्वचि-
द्विनाशकारणानुपलब्धेः क्वचिच्चोपल-
ब्धेरनेकान्तः ॥ १९ ॥ २ ॥ नेन्द्रि-
यार्थयोस्तद्विनाशेऽपि ज्ञानावस्थाना-
त् ॥ २० ॥ युगपज्ज्ञेयानुपलब्धेश्च न
मनसः ॥ २१ ॥ तदात्मगुणत्वेऽपि
तुल्यम् ॥ २२ ॥ इन्द्रियैर्मनसस्सन्नि-
कर्षाभावात्तदनुत्पत्तिः॥२३॥ नोत्प-
त्तिकारणानपदेशात् ॥ २४ ॥ विना-
शकारणानुपलब्धेश्चावस्थाने तन्नित्य-
त्वप्रसंगः ॥ २५ ॥ अनित्यत्वग्रहा-

दुःखेर्बुद्ध्यन्तराद्विनाशश्शब्दवत् ॥२६॥
ज्ञानसमवेतात्मप्रदेशसान्निकर्षान्मनसः
स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २७ ॥
नान्तश्शरीरवृत्तित्वान्मनसः ॥२८ ॥
साध्यत्वादहेतुः ॥ २९ ॥ स्मरतश्श-
रीरधारणोपपत्तेरप्रतिषेधः ॥ ३०॥ न
तदाशुगतित्वान्मनसः ॥ ३१ ॥ न
स्मरणकालानियमात् ॥ ३२ ॥(आ-
त्मप्रेरणयदृच्छाज्ञताभिश्च न संयोग-
विशेषः ॥ ३३॥ व्यासक्तमनसः पाद-
व्यथनेन संयोगविशेषेण समानम् ३४।
प्रणिधानलिंगादिज्ञानानामयुगपद्भावा-

युगपदस्मरणम् ॥ ३५ ॥ प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्यप्रसंगः ॥ ३६ ॥ ज्ञस्येच्छाद्वेषानिमित्तत्वादारम्भनिवृत्त्योः ॥ ३७ ॥ तल्लिंगत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३८ ॥ परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३९ ॥ कुम्भादिष्वनुपलब्धेरहेतुः ॥ ४० ॥ ) नियमानियमौ तु तद्विशेषकौ ॥ ४१ ॥ यथोक्तहेतुत्वात्पारतन्त्र्यात्स्वकृताभ्यागमाच्च न मनसः ॥ ४२ ॥ परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४३ ॥ स्मरणं

त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४४ ॥
प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृ-
श्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवि
योगैककार्यविरोधातिशयप्राप्तिव्यव-
धानसुखदुःखेच्छाद्वेषभयाऽर्थित्वाक्रि-
यारागधर्माधर्म्मनिमित्तेभ्यः॥४५॥३।
कर्मानवस्थायिग्रहणात् ॥४६॥ अव्य-
क्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते
रूपाव्यक्तग्रहणवत् ॥ ४७ ॥ हेतूपा-
दानात्प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४८ ॥
( ग्रहणे हेतुविकल्पाद्ग्रहणविकल्पो न
बुद्धिविकल्पात् ॥ ४९ ॥ ) न प्रदी-

पार्थिवस्सन्तत्याभिव्यक्तग्रहणवत्तद्ग्रह-
णमनवस्थायित्वेऽपि ॥ ५० ॥ ४ ॥ द्रव्ये
स्वगुणपरगुणोपलब्धेस्संशयः ॥ ५१ ॥
यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ५२ ॥
न पाकजगुणान्तरोत्पत्तेः ॥ ५३ ॥
प्रतिद्वन्द्विसिद्धेः पाकजानामप्रति-
षेधः ॥ ५४ ॥ शरीरव्यापित्वा-
त् ॥ ५५ ॥ न केशनखादिष्वनुपल-
ब्धेः ॥ ५६ ॥ त्वक्पर्यन्तत्वाच्छरी-
रस्य केशनखादिष्वप्रसङ्गः ॥ ५७ ॥
शरीरगुणवैधर्म्यात् ॥ ५८ ॥ न रूपा-
दीनामितरेतरवैधर्म्यात् ॥ ५९ ॥ ऐन्द्रि-

यकत्वाद्रूपादीन प्रतिषेधः ॥ ६० ॥
॥ ९ ॥ ज्ञानायौगपद्यादेकं मनः ॥
॥ ६१ ॥ न युगपदनेकक्रियोपल-
ब्धेः ॥ ६२॥ अलातचक्रदर्शनवत्तदु-
पलब्धिराशु सञ्चारात्॥ ६३॥ यथोक्त-
हेतुत्वाच्चाणु ॥६४॥६॥पूर्वकृतफला-
नुबन्धात्तदुत्पत्तिः ॥ ६५ ॥ भूतेभ्यो
मूर्त्त्युपादानवत्तदुपादानम् ॥ ६६ ॥
न साध्यसमत्वात् ॥ ६७॥ नोत्पत्ति-
निमित्तत्वान्मातापित्रोः ॥ ६८ ॥
तथाऽऽहारस्य ॥ ६९॥ प्राप्तौ चानि-

यमात् ॥ ७० ॥ शरीरोत्पत्तिनिमि-
त्तवत्संयोगोत्पत्तिनिमित्तं कर्म्म ।७१।
एतेनानियमः प्रत्युक्तः ॥ ७२ ॥
( उपपन्नश्च तद्वियोगः कर्म्मक्षयोप-
पत्तेः ॥ ७३ ॥ तददृष्टकारितमिति
चेत् ) पुनस्तत्प्रसङ्गोपवर्गे ॥ ७४ ॥
( न करणाकरणयोरारम्भदर्शनात्
॥ ७५ ॥ ) मनःकर्म्मनिमित्तत्वाच्च
संयोगानुच्छेदः ॥ ७६ ॥ नित्यत्वप्र-
संगश्च प्रायणानुपपत्तेः ॥ ७७ ॥ अणु-
श्यामतानित्यत्ववदेतत्स्यात् ॥७८॥

**नाकृताभ्यागमप्रसंगात् ॥ ७१॥७ ॥**

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने तृतीयस्याध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥
॥ २ ॥ समाप्तोऽध्यायस्तृतीयः ॥

( १ ) बुद्धिनित्यता ( २ ) क्षणभङ्ग( ३ ) बुद्ध्यात्मगुणत्व ( ४ ) बुद्धेरुत्पन्नापवर्गित्व ( ५ ) बुद्धिशरीरगुणभेद ( ६ ) मनःपरीक्षा ( ७ ) शरीरस्यादृष्टनिष्पाद्यत्वंत्यत्र पादे सप्त प्रकरणानि ॥



**प्रवृत्तिर्यथोक्ता ॥१॥ तथा दोषाः ॥ २ ॥ १ ॥ तत्त्रैराश्यं रागद्वेषमोहा-**

र्थान्तरभावात् ॥ ३॥ नैकप्रत्यनीक-
भावात् ॥ ४ ॥ व्यभिचारादहेतुः
॥५ ॥ तेषां मोहः पापीयान्नामूढस्ये-
तरोत्पत्तेः ॥ ६ ॥ ( प्राप्तस्तर्हि ) नि-
मित्तनैमित्तिकभावादर्थान्तरभावो दो-
षेभ्यः ॥ ७ ॥ न दोषलक्षणावरोधा-
न्मोहस्य ॥ ८ ॥ निमित्तनैमित्तिको-
पपत्तेश्च तुल्यजातीयानामप्रतिषेधः
॥ ९ ॥ २ ॥ आत्मनित्यत्वे प्रेत्यभा-
वसिद्धिः ॥१०॥व्यक्ताद्व्यक्तानां प्रत्य-
क्षप्रामाण्यात् ॥ ११ ॥ न घटाद्घटा-
निष्पत्तेः ॥ १२ ॥ व्यक्ताद्घटनिष्पत्ते

रप्रतिषेधः ॥ १३ ॥ ३ ॥ अभावा-
द्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्
॥१४॥ न व्याघातादप्रयोगः॥१५॥
नातीतानागतयोः कारकशब्दप्रयो-
गात् ॥१६ ॥ न विनष्टेभ्योऽनिष्पत्तेः
॥ १७ ॥ क्रमनिर्देशादप्रतिषेधः
॥ १८ ॥४ ॥ ईश्वरः कारणं पुरुषक-
र्मफलदर्शनात् ॥ १९ ॥ न पुरुषक-
र्म्माभावे फलानिष्पत्तेः ॥ २० ॥
तत्कारितत्वादहेतुः ॥ २१ ॥ ५ ॥
अनिमित्ततो भावोत्पत्तिः कण्टकतै-
क्ष्ण्यादिदर्शनात् ॥ २२॥ अनिमित्त-

निमित्तत्वान्नानिमित्ततः ॥२३॥ निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥२४॥६॥ सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥ नानित्यता नित्यत्वात् ॥ २६ ॥तदनित्यत्वमग्नेर्दाह्यविनाश्यानुविनाशवत् ॥२७॥ नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥ २८॥७॥ सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९॥नोत्पत्तिविनाशकारणोपलब्धेः ॥३० ॥ तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥ नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥ न

व्यवस्थानुपपत्तेः ॥ ३३ ॥ ८ ॥सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥ नानेकलक्षणैरेकभावनिष्पत्तेः ॥३५॥ लक्षणव्यवस्थानादेवाप्रतिषेधः ॥३६॥ ॥९॥सर्वमभावो भावेष्वितरेतराभाव-सिद्धेः ॥ ३७ ॥ न स्वभावसिद्धेर्भा-वानाम् ॥ ३८ ॥ न स्वभावसिद्धि-रापेक्षिकत्वात् ॥ ३९ ॥ व्याहतत्वा-दयुक्तम् ॥ ४०॥ १०॥संख्यैकान्ता-सिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥४१॥न कारणावयवभावात् ॥४२॥ निरवयवत्वादहेतुः ॥४३॥११ ॥क्षणि-

कालान्तरे च फलनिष्पत्तेस्संशयः ४४ न सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥ कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६॥ प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥ नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ॥ ४८॥ उत्पादव्ययदर्शनात्॥४९॥ बुद्धिसिद्धं तु तदसत् ॥५० ॥ आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः॥५१ ॥ प्रीतेरात्माश्रयत्वादहेतुः ॥ ५२ ॥ न पुत्रपशुस्त्री परिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५३ ॥

तत्सम्बन्धात्फलनिष्पत्तेस्तेषु फलव-
दुपचारः॥५४॥ ॥ १२। विविधबाधना-
योगाद्दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥
( न ) सुखस्यान्तरालनिष्पत्तेः॥५६॥
बाधनाऽनिष्पत्तेर्वेदयतः पर्येषणदो-
षादप्रतिषेधः ॥ ५७ ॥ दुःखविकल्पे
सुखाभिमानाच्च॥५८।१३ ॥ऋणक्लेश-
प्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥
प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो
निन्दाप्रशंसोपपत्तेः ॥ ६० ॥ स-
मारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥

पात्रचयान्तानुपपत्तेश्च फलाभावः ॥६२॥ सुषुप्तस्य स्वप्नादर्शने क्लेशा-भावादपवर्गः ॥ ६३ ॥ न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६४ ॥ न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६५ ॥ प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥ अणुश्यामता नित्यत्ववद्वा ॥ ६७ ॥ न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ ॥ ६८ ॥ १४ ॥

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने चतुर्थस्याध्यायस्याद्यमाह्निकम् ॥४॥१॥

(१) प्रवृत्तिदोषसामान्यपरीक्षा (२) दोषपरीक्षा (३) प्रत्यभावपरीक्षा (४) शून्यतोपादाननिराकरणे (५) ईश्वरोपादाना (६) ऽऽकस्मिकत्व (७) सर्वानित्यत्वनिराकरण (८) सर्वनित्यत्वानिराकरण (९) सर्वपृथक्त्वनिराकरण (१०—११) सर्वशून्यतानिराकरण (१२) फलपरीक्षा (१३) दुःखपरीक्षा (१४) ऽपवर्गपरीक्षेति चतुर्दश प्रकरणान्यत्र पादे ॥

---

**दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥ दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ॥२॥१॥ ( तन्निमित्तंत्ववयव्यभिमानः ॥ ३॥)**

विद्याविद्याद्वैविध्यात्संशयः ॥ ४ ॥ तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥ वृत्त्यनुपपत्तेरपि तर्हि न संशयानुपपत्तिः ॥ ६ ॥ पृथक् चावयवेभ्यो-ऽवृत्तेः ॥ ७ ॥ न चावयव्यवयवाः ॥ ८ ॥ एकस्मिन् भेदाभावाद्भेद (शब्द)प्रयोगानुपपत्तेरप्रश्नः ॥ ९ ॥ अवयवान्तराभावेऽप्यवृत्तेरहेतुः ॥ १० ॥ केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ ११ ॥ स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रह-

णस्य तथा भावो नाविषये प्रवृत्तिः ॥ १२ ॥ अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ॥ १३ ॥ न प्रलयोऽणुसद्भावात् ॥ १४ ॥ परं वा त्रुटेः ॥ १५ ॥ २ ॥ आकाशव्यतिभेदात्तदनुपपत्तिः ॥ १६ ॥ आकाशासर्वगतत्वं वा ॥ १७ ॥ अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥ १८ ॥ शब्दसंयोगविभवाच्च सर्वगतम् ॥ १९ ॥ अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २० ॥ मूर्त्तिमतांच संस्थानोपपत्तेरवयवसद्भावः ॥ २१ ॥

अनवस्थाकारित्वादनवस्थानुपपत्ते-
श्चाप्रतिषेधः ॥ २२ ॥ ३ ॥ बुद्ध्या
विवेचनात्तु भावानां याथात्म्या-
नुपलब्धिस्तन्त्वपकर्षणे पटसद्भा-
वानुपलब्धिवत् ॥ २३ ॥ व्याहत-
त्वादहेतुः ॥ २४ ॥ तदाश्रयत्वाद-
पृथग्ग्रहणम् ॥ २५ ॥ प्रमाणतश्चार्थ-
प्रतिपत्तेः ॥ २६ ॥ प्रमाणोपपत्त्य-
नुपपत्तिभ्याम् ॥ २७ ॥ स्वप्नविषया-
भिमानवदयं प्रमाणप्रमेयाभिमानः ॥ २८
मायागन्धर्वनगरमृगतृष्णावद्वा ॥ २९ ॥
हेत्वभावादसिद्धिः ॥ ३० ॥ स्मृति-

सङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३१ ॥ मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे ॥ ३२ ॥ बुद्धेश्चैवं निमित्तसद्भावोपलम्भात्।३३। तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३४ ॥ ४ ॥ समाधिविशेषाभ्यासात् ॥ ३५ ॥ नार्थविशेषप्राबल्यात्॥ ३६ ॥ क्षुदादिभिः प्रवर्त्तनाच्च ॥ ३७ ॥ पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ३८ ॥ अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशा-

त् ॥ ३९॥ अपवर्गेऽप्येवं प्रसंगः॥४०॥
न निष्पन्नावश्यम्भावित्वात् ॥ ४१॥
तदभावश्चापवर्गे ॥ ४२॥ तदर्थं यम-
नियमाभ्यामात्मसंस्कारो योगाच्चा-
ध्यात्मविध्युपायैः ॥ ४३ ॥ ज्ञानग्र-
हणाभ्यासस्तद्विद्यैस्सह संवादः॥४४॥
तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽ-
र्थिभिरनसूयुभिरभ्युपेयात् ॥ ४५ ॥
प्रतिपक्षहीनमपि वा प्रयोजनार्थित्वे
वा ॥ ४६ ॥५ ॥ तत्त्वाध्यव-
सायसंरक्षणार्थं जल्पवितण्डे बी-
जप्ररोहसंरक्षणार्थं कण्टकशाखावर-

णवत् ॥ ४७ ॥ ताभ्यां विगृह्य कथनम् ॥ ३८ ॥

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने चतुर्थस्याध्यायस्य द्वितीयमाह्निकम् ॥ ४ ॥ २ ॥

समाप्तोऽध्यायश्चतुर्थः ॥

(१) तत्त्वज्ञानोत्पत्तिप्रकरणम् (२अवयविप्रकरणं (३) निरवयवप्रकरणं (४) बाह्यार्थभङ्गनिराकरणं (५) तत्त्वज्ञानविवृद्धिः (६)तत्त्वज्ञानपरिपालनं चेति पादेऽत्र षट् प्रकरणानि॥

---

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्तप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपल-

किधनित्यानित्यकार्य्यसमाः ( २४ ) ॥ १ ॥ साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः ( साधर्म्यवैधर्म्यसमौ )॥ २॥ गोत्वादगोसिद्धिवत्तत्सिद्धिः॥ ३ ॥साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्च ( उत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ) ॥४॥ किञ्चित्साधर्म्यादुपसंहारासिद्धेर्वैधर्म्यादेतद्विपरीतात् ( अप्रतिषेधः ) ॥ ५॥साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६॥ ७॥प्राप्यसाध्यमप्राप्य वा हेतोः प्राप्त्या विशिष्टत्वादप्राप्त्या साधक-

त्वाच्च ( प्राप्त्यप्राप्तिसमौ ) ॥ ७॥ घटादिनिष्पत्तिदर्शनात्पीडने चाभिचाराद्प्रतिषेधः ॥ ८ ॥ २-३॥ दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन ( प्रसङ्गप्रतिदृष्टान्तसमौ ) ॥ ९ ॥ प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥ प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११॥४॥५॥ प्रागुत्पत्तेः। कारणाभावात्(अनुत्पत्ति समः)॥ १२।तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः॥ १३॥६॥ सामान्यदृष्टान्तयोरैन्द्रियकत्वे समान

नित्यानित्यसाधर्म्यात् ( संशयसमः ) ॥१४॥साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमात् सामान्यस्याप्रतिषेधः॥१५।७॥ उभयसाधर्म्यात्प्रक्रियासिद्धेः ( प्रकरणसमः)१६ प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः॥१७॥८॥त्रैकाल्यासिद्धेर्हेतोः (अहेतुसमः ( ।१८। न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥१९॥प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः।२०॥९॥ अर्थापत्ति-

तः प्रतिपक्षासिद्धेः ( अर्थापत्तिसमः ) ।२१। अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तेरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२॥ १० ॥एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेः ( अविशेषसमः )॥२३॥ क्वचिद्धर्म्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः॥२४ ॥ ११ ॥उभयकारणोपपत्तेः ( उपपत्तिसमः )॥२५॥ उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥२६॥ १२॥ निर्दिष्टकारणाभावेप्युपलम्भात् ( उपलब्धिसमः ) ॥२७॥कारणान्तरादपि

तद्धर्म्मोपपत्तेरप्रतिषेधः ॥२८॥१३॥ तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेः ( अनुपलब्धिसमः ) ॥२९॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥३०॥ ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ।३१।१४। साधर्म्यात्तुल्यधर्मोपपत्तेस्सर्व्वानित्यत्वप्रसङ्गात ( अनित्यसमः ) ॥३२॥ साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् ॥३३॥ दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य

हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥३४॥१५॥ नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः ( नित्यसमः ) ॥३५॥१६॥ प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥ प्रयत्नकार्य्यानेकत्वात् ( कार्य्यसमः ) ॥ ३७ ॥ कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥ प्रतिषेधेपि समानो दोषः ॥ ३९ ॥ सर्वत्रैवम् ॥४०॥ प्रतिषेधाविप्रतिषेधे (प्रतिषेधदोषवद्दोषः )॥४१॥१७॥प्रतिषेधं

सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो (मतानुज्ञा)॥४२॥

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोष (प्रसङ्गः)॥ ४३ ॥ १८ ॥

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने पञ्चमस्याध्यायस्य प्रथममाह्निकम् ॥ ५ ॥ १ ॥

(१) जातिषट्कनिरूपणमित्येकं (१७) प्राप्त्यप्राप्तिसमादीनि सप्तदशानीत्येकीकृत्याष्टादश पादेत्र प्रकरणानि ॥

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थ-

क्रमप्राप्तकालं न्यूनमधिकं पुनरुक्तम-
ननुभाषणमज्ञानमप्रतिभा विक्षेपो म-
तानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनु-
योज्यानुयोगोपसिद्धान्तो हेत्वाभा-
साश्च ( निग्रहस्थानानि )॥१॥ प्रति-
दृष्टान्तधर्माभ्यनुज्ञास्वदृष्टान्ते (प्रति-
ज्ञाहानिः ) ॥ २ ॥ प्रतिज्ञातार्थप्रति-
षेधे धर्मविकल्पात्तदर्थनिर्देशः ( प्रति-
ज्ञान्तरम् ) ॥३॥ प्रतिज्ञाहेत्वोर्विरोधः
( प्रतिज्ञाविरोधः )॥४॥पक्षप्रतिषेधे प्र-
तिज्ञानार्थापनयनं ( प्रतिज्ञासंन्यासः)
॥ ५ ॥ अविशेषोक्ते हेतौ प्रतिषिद्धे

विशेषमिच्छतो ( हेत्वन्तरम् )॥६॥१
प्रकृतादर्थादसम्बन्धार्थम् (अर्थान्तरम् )
॥७॥वर्णक्रमनिर्देशवत् ( निरर्थकम् )
॥८॥ परिषत्प्रतिवादिभ्यां त्रिरभिहि-
तमप्यविज्ञातम् ( अविज्ञातार्थम् )।९।
पौर्वापर्यायोगादप्रतिसम्बद्धार्थम्
(अपार्थकम्)॥१०॥२ अवयवविपर्या-
सवचनम्(अप्राप्तकालम्)॥११॥हीन-
मन्यतमेनाप्यवयवेन (न्यूनम्)॥१२॥
हेतूदाहरणाधिकम्(अधिकम् )।१३।२
शब्दार्थयोः पुनर्वचनं(पुनरुक्तम्) अ-
न्यत्रानुवादात् ॥ १४ ॥ अर्थादापन्न-

स्य स्वशब्देन पुनरभिधानम् ॥१५॥
विज्ञातस्य परिषदा त्रिरभिहितस्या-
प्यप्रत्युच्चारणम् (अननुभाषणम्)
॥१६॥ अविज्ञातञ्च (अज्ञानम्) ।१७॥
उत्तरस्याप्रतिपत्तिः (अप्रतिभा) ।१८॥
कार्यव्यासंगात्कथाविच्छेदो ( वि-
क्षेपः )॥१९॥ स्वपक्षे दोषाभ्युपगमा-
त्परपक्षे दोषप्रसंगो (मतानुज्ञा)॥२०॥
निग्रहस्थानप्राप्तस्यानिग्रहः ( पर्यनु-
योज्योपेक्षणम् ) ॥ २१ ॥ अनिग्रह-
स्थाने निग्रहस्थानाभियोगो ( निरनु-
योज्यानुयोगः ) ॥२२॥ सिद्धान्तम-

**भ्युपेत्यानियमात्कथाप्रसंगः ( अपसिद्धान्तः ) ॥ २३ ॥ ( हेत्वाभासाश्च ) यथोक्ताः ॥ २४ ॥ ४ ॥**

इति श्रीगौतममहर्षिप्रणीते न्यायदर्शने पञ्चमस्याध्यायस्य द्वितीयमाह्निकम् ॥५ ॥२ ॥

इति पञ्चमोऽध्यायस्समाप्तः ॥

( १ ) न्यायाश्रितनिग्रहपञ्चकम् ( २ ) अभिमतवाक्यार्थप्रतिपादकानिग्रहस्थानचतुष्कं ( ३ ) स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकं ( ४ ) निग्रहस्थानविशेषश्चेति प्रकरणान्यत्र पादे चत्वारि ॥

**॥ समाप्तं चेदं न्यायदर्शनम् ॥**

---

अत्र सूत्रपाठे कुण्डल्यन्तर्गता ग्रन्थाः केचि-

लक्ष्यभूताः केचिदाधिकपाठभूताः प्रक्षिप्ता वा केचिद्वार्तिकभूताः इति यथायथं बोध्यम् ॥



श्रीरस्तु ।

श्रीकणादमहर्षिप्रणीतं

# वैशेषिकदर्शनम् ।

श्रीकृष्णदासात्मज-गङ्गाविष्णुना
स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९८२, शाकाब्दाः १८४७.

कल्याण-मुंबई.

श्रीगणेशाय नमः॥

श्रीमत्कणादमहर्षिप्रणीतम्

# वैशेषिकदर्शनम् ॥



## प्रथमोऽध्यायः ।

समवेताशेषपदार्थकथनम् ॥

वेदमूलं धर्मं निरूप्य षट्पदार्थपरीचिक्षिषया द्रव्यगुणकर्मनिरूपणानि ॥

अथातो धर्मं व्याख्यास्यामः॥ १ ॥ यतोऽभ्युदयनिःश्रेयससिद्धिस्सः (धर्मः) ॥ २॥ तद्वचनादू (आम्नायस्य प्रामाण्यम्) ॥ ३ ॥ धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवा-

यानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥ ४ ॥ पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति ( द्रव्याणि ) ॥ ५ ॥ रूपरसगन्धस्पर्शास्सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च ( गुणाः ) ॥६ ॥ उत्क्षेपणमप (व) क्षेपणमाकुञ्चनं प्रसारणं गमनमिति ( कर्माणि ) ॥ ७ ॥ सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति(द्रव्यगुणकर्मणाम्)अविशेषः ८॥

( द्रव्यगुणयोः ) सजातीयारम्भकत्वं साधर्म्यम् ॥ ९ ॥ द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥ १० ॥ कर्म कर्मसाध्यं न विद्यते ॥ ११ ॥ न द्रव्यं कार्यं कारणं च बाधति ॥ १२ ॥ उभयथा गुणाः ॥ १३ ॥ कार्यविरोधि कर्म ॥ १४ ॥ क्रियागुणवत्समवायिकारणमिति ( द्रव्यलक्षणम् ) ॥ १५ ॥ द्रव्याश्रय्यगुणवान्संयोगविभागेष्वकारणमनपेक्ष इति (गुणलक्षणम् ) १६। एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति ( कर्मलक्षणम् ) ॥ १७ ॥

( द्रव्यगुणकर्मणां) द्रव्यं कारणं सामान्यम् ॥ १८ ॥ तथा गुणाः ॥ १९॥ ( संयोगविभागवेगानां ) कर्म समानम् ॥ २०॥न द्रव्याणां कर्म॥२१॥ व्यतिरेकात् ॥ २२ ॥ द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥ २३ ॥ गुणवैधर्म्यान्न कर्मणां कर्म ॥ २४ ॥ द्वित्वप्रभृतयस्संख्याः पृथक्त्वसंयोगविभागाश्च ॥ २५ ॥ असमवायात्सामान्यकार्यं कर्म न विद्यते ॥ २६ ॥ संयोगानां द्रव्यम् ॥ २७ ॥ रूपाणां रूपम् ॥ २८ ॥ गुरुत्वप्रयत्नसंयोगा-

नामुत्क्षेपणम् ॥ २९ ॥ संयोगविभागाश्च कर्मणाम् ॥ ३० ॥ कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ॥ ३१ ॥

इति श्रीमत्कणादमहर्षिप्रणीते वैशेषिकदर्शने प्रथमाध्यायस्य प्रथममाह्निकम् ॥ १ ॥ १ ॥

---

द्रव्यगुणकर्मसु कार्यकारणभावव्यवस्था ॥

कारणभावात्कार्याभावः ॥ १ ॥ न तु कार्याभावात्कारणाभावः ॥ २ ॥ सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३ ॥ भावोऽनुवृत्तेरेव हेतुत्वात्सामान्यमेव ॥ ४ ॥ द्रव्यत्वं कर्मत्वं गुणत्वं च सामान्यानि विशेषाश्च ॥ ५ ॥ अन्यत्रान्त्ये-

भ्यो विशेषेभ्यः ॥ ६ ॥ सदिति यतो द्रव्यगुणकर्मसु सा ( सत्ता)॥७॥द्रव्य-गुणकर्मभ्योऽर्थान्तरं ( सत्ता )॥ ८ ॥
गुणकर्मसु च भावान्न कर्म न गुणः।९।
सामान्यविशेषाभावेन च ॥ १० ॥
अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ।११।
सामान्यविशेषाभावेन च ॥ १२ ॥
तथा गुणेषु भावाद्गुणत्वमुक्तम्॥ १३॥
सामान्यविशेषाभावेन च ॥ १४ ॥
कर्मसु भावात्कर्मत्वमुक्तम् ॥ १५ ॥
सामान्यविशेषाभावेन च ॥ १६ ॥

सदिति लिंगाविशेषाद्विशेषलिंगाभावाच्चैको भावः ॥ १७ ॥

इति श्रीमत्कणादमहर्षिप्रणीते वैशेषिकदर्शने प्रथमाध्यायस्य द्वितीयमाह्निकम्॥ १ ॥ २ ॥ समवेताशेषपदार्थकथनं नाम प्रथमोऽध्यायः समाप्तः ॥



# अथ द्वितीयोऽध्यायः ।

द्रव्यनिरूपणम् ॥

नवद्रव्यलक्षणानि—ईश्वराकाशयोस्साधनं च॥

रूपरसगन्धस्पर्शवती ( पृथिवी ) ॥ १ ॥ रूपरसस्पर्शवत्य ( आपो ) द्रवाः स्निग्धाः ॥२॥ (तेजो ) रूपस्प-

र्शवत् ॥३॥ स्पर्शवान् (वायुः)॥४॥ त आकाशे न विद्यन्ते ॥ ५ ॥ सर्पिर्जन्तुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भिस्सामान्यम् ॥ ६ ॥ त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ७ ॥ विषाणी ककुद्मान्प्रान्तेवालधिस्सास्नावानिति ( गोत्वे दृष्टं लिंगम् )॥ ८ ॥ स्पर्शश्च वायोः ॥ ९ ॥ न च दृष्टानां स्पर्श इत्यदृष्टलिंगो ( वायुः ) ॥१० ॥अद्रव्यत्वेन द्रव्यम् ॥ ११ ॥ क्रियावत्त्वाद्गुणवत्त्वाच्च ॥१२ ॥ अद्रव्यत्वेन

नित्यत्वमुक्तम् ॥ १३ ॥ वायो-
र्वायुसम्मूर्च्छनं नानात्वे लि-
ङ्गम् ॥ १४॥ वायुसन्निकर्षे प्रत्यक्षा-
भावाद्दृष्टं लिंगं न विद्यते ॥ १५ ॥
सामान्यतो दृष्टाच्चाविशेषः ॥ १६ ॥
तस्मादागमिकम् ॥ १७ ॥ संज्ञाकर्म
त्वस्मद्विशिष्टानां लिङ्गम् ॥ १८ ॥
प्रत्यक्षप्रवृत्तत्वात्संज्ञाकर्मणः ॥ १९॥
निष्क्रमणं प्रवेशनमिति ( आकाशस्य
लिंगम् )॥२०॥ तदलिंगमेकद्रव्यत्वा-
त्कर्मणः ॥२१॥ कारणान्तरानुक्लृप्ति-
वैधर्म्याच्च ॥ २२ ॥ संयोगादभावः

कर्मणः ॥ २३ ॥ कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥ २४ ॥ कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥२५॥ परत्र समवायात्प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥ परिशेषाल्लिङ्गमाकाशस्य ॥ २७ ॥ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २८ ॥ तत्त्वं भावेन ॥ २९ ॥ शब्दलिंगाविशेषाद्विशेषलिंगाभावाच्च ॥ ३० ॥ तदनुविधानादेकपृथक्त्वं चेति ॥ ३१ ॥

इति श्रीमत्कणादमहर्षिप्रणीते वैशेषिकदर्शने द्वितीयाध्यायस्य प्रथममाह्निकम्॥२॥१॥

गन्धादीनां स्वाभाविकत्वौपाधिकत्वव्य-
वस्था ॥

पुष्पवस्त्रयोस्सति सन्निकर्षे गुणा-
न्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम्
॥ १॥ व्यवस्थितः (पृथिव्यां) गन्धः
॥ २ ॥ एतेनोष्णता व्याख्याता ॥ ३॥
तेजस उष्णता ॥ ४ ॥ (अप्सु) शी-
तता ॥ ५॥ अपरस्मिन्नपरं युगपच्चिरं
क्षिप्रमिति (काललिङ्गानि) ॥ ६ ॥
द्रव्यत्वनित्यत्वे वायुना व्याख्याते
७।.तत्त्वं भावेन ८ नित्येष्वभावादनि-

त्येषु भावात्कारणे कालाख्येति ९ इत इदमिति यतस्तद् ( दिश्यं लिंगम् ) ॥ १० ॥ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥ तत्त्वं भावेन १२ कार्यविशेषेण नानात्वम् ॥ १३ ॥ आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च ( प्राची ) ॥ १४ ॥ तथा ( दक्षिणा )( प्रतीची ) ( उदीची) च ॥ १५ ॥ एतेन दिगन्तरालानि व्याख्यातानि ॥ १६ ॥ सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च ( संशयः ) ॥ १७ ॥ दृष्टं च दृष्टवत्

॥ १८ ॥ यथादृष्टमयथादृष्टत्वाच्च
॥ १९ ॥ विद्याऽविद्यातश्च संशयः
२० श्रोत्रग्रहणो यो—र्थस्स(शब्दः)२१
तुल्यजातीयेष्वर्थान्तरभूतेषु विशेष-
स्योभयथा दृष्टत्वात् ॥ २२ ॥ एक-
द्रव्यत्वान्न द्रव्यम् ॥ २३ ॥ नापि
कर्माऽचाक्षुषत्वात् ॥ २४ ॥ गुणस्य
सतोऽपवर्गः कर्मभिस्साधर्म्यम् ॥२५॥
सतो लिंगाभावात् ॥ २६ ॥ नित्य-
वैधर्म्यात् ॥ २७ ॥ अनित्यश्चायं
कारणः ॥ २८ ॥ न चासिद्धं विका-

रात् ॥ २९ ॥ अभिव्यक्तौ दोषात् ॥ ३० ॥ संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः ॥ ३१ ॥ लिङ्गाच्चानित्यश्शब्दः ॥३२॥ द्वयोस्तु प्रवृत्तयोरभावात् ॥ ३३ ॥ प्रथमाशब्दात् ॥३४॥ सम्प्रतिपत्तिभावाच्च ॥ ३५ ॥ सन्दिग्धास्सति बहुत्वे ॥ ३६ ॥ सङ्ख्याभावस्सामान्यतः ॥ ३७ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने द्वितीयाध्यायस्य द्वितीयमाह्निकम् २॥२।
द्रव्यनिरूपणं नाम द्वितीयोऽध्यायश्च समाप्तः ॥



# अथ तृतीयोऽध्यायः ।

आत्मान्तःकरणलक्षणम् ।

आत्मपरीक्षा ॥

प्रसिद्धा इन्द्रियार्थाः ॥ १ ॥ इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ २ ॥ सोऽनपदेशः ॥ ३ ॥ कारणाज्ञानात् ॥ ४ ॥ कार्येषु ज्ञानात् ॥ ५ ॥ अज्ञानाच्च ॥ ६ ॥ अन्यदेव हेतुरित्यनपदेशः ॥ ७ ॥ अर्थान्तरं ह्यर्थान्तरस्याऽनपदेशः ॥ ८ ॥ संयोगि समवाय्येकार्थसमवायि वि-

रोधि च ॥ ९ ॥ कार्यं कार्यान्तरस्य ॥ १० ॥ विरोध्यभूतं भूतस्य ॥ ११ ॥ भूतमभूतस्य ॥ १२ ॥ भूतो भूतस्य ॥ १३ ॥ प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ १४ ॥ अप्रसिद्धोऽनपदेशोऽसन्स-न्दिग्धश्चानपदेशः ॥ १५ ॥ यस्माद्वि-षाणी तस्मादश्वः ॥ १६ ॥ यस्मा-द्विषाणी तस्माद्गौरिति चानैकान्तिक-स्योदाहरणम् ॥ १७ ॥ आत्मेन्द्रियार्थ सन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ १८ ॥

प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिंगम् ॥ १९ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने तृतीयाध्यायस्य प्रथममाह्निकम् ॥ १ ॥ ॥

मनःपरीक्षाद्वारा हेतुहेत्वाभासविवेकः ॥

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च ( मनसो लिङ्गम् )॥ १॥ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥ प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥ प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्ना-

श्च ( आत्मनो लिङ्गानि ) ॥ ४ ॥ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥ यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद्दृष्टलिङ्गं न विद्यते ॥ ६ ॥ सामान्यतो दृष्टाच्चाविशेषः॥ ७ ॥ तस्मादागमिकः ॥८ ॥ अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥ यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति॥ १० ॥ दृष्टयात्मनि लिंगे एक एव दृढत्वात्प्रत्यक्षवत्प्रत्ययः ॥ ११ ॥ देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचारा-

च्छरीरे प्रत्ययः ॥ १२ ॥ सन्दिग्ध-स्तूपचारः ॥ १३ ॥ अहमिति प्र-त्यगात्मनि भावात्परत्राभावादर्थान्त-रप्रत्यक्षः ॥ १४ ॥ देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरी-रप्रत्यक्षो (ऽहङ्कारः) ॥ १५॥ सन्दि-ग्धस्तूपचारः ॥ १६ ॥ न तु शरीरविशेषाद्यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः ॥ १७ ॥ अहमिति मुख्य-योग्याभ्यां शब्दवद्व्यतिरेकाव्यभि-चाराद्विशेषसिद्धेर्नागमिकः ॥ १८ ॥ सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्य-

म् ॥ १९ ॥ व्यवस्थातो नाना ॥ २० ॥ शास्त्रसामर्थ्याच्च ॥ २१ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ ३ ॥२ ॥

आत्मान्तःकरणलक्षणं नाम तृतीयोऽध्यायः समाप्तः ॥

---

# अथ चतुर्थोऽध्यायः ।

शरीरतदुपयोगिनोर्विवेचनम् ॥ परमाणूनां मूलकारणत्वादिवर्णनं प्रकृतेर्मूलकारणत्वनिरासाय ॥

सदकारणवन्नित्यम् ॥ १ ॥ तस्य कार्यं लिंगम् ॥ २ ॥ कारणा-

भावात्कार्यभावः ॥ ३ ॥ अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४ ॥ अविद्या ॥ ५ ॥ महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः ॥ ६ ॥ सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः ॥ ७ ॥ अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥ ८ ॥ तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ ९ ॥ तस्याभावादव्यभिचारः॥१०॥ सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसम-

वायाच्चाक्षुषाणि ॥ ११ ॥ अप्स्वपि-
ष्वचाक्षुषाणि ॥ १२ ॥ एतेन गुणत्वे
भावे च सर्वेन्द्रियं ज्ञानं व्याख्या-
तम् ॥ १३ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने
चतुर्थाध्यायस्य प्रथममाह्निकम् ॥ ४ ॥ १ ॥

कार्यद्रव्यविभागः ॥

तत्पुनः पृथिव्यादिकार्यं द्रव्यं
त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥ १ ॥
प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्ष-
त्वात्पञ्चात्मकं न विद्यते ॥ २ ॥

गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ ३ ॥ अणुसंयोगस्त्वप्रतिषिद्धः ॥ ४ ॥ तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥ ५ ॥ अनियतदिग्देशपूर्वकत्वात् ॥ ६ ॥ धर्मविशेषाच्च ॥ ७ ॥ समाख्याभावाच्च ॥ ८ ॥ संज्ञाया अनादित्वात् ॥ ९ ॥ सन्त्ययोनिजाः ॥ १० ॥ वेदलिङ्गाच्च ॥ ११ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥ ४ ॥ २ ॥

शरीरतदुपयोगिविवेचनं नाम समासश्चायं चतुर्थोऽध्यायः ॥



# अथ पञ्चमोऽध्यायः ।

कर्मपरीक्षा ॥

प्रयत्ननिष्पाद्यकर्मपरीक्षा उत्क्षेपणम्—अप्रयत्नोत्क्षेपणं-पुण्यहेतुककर्माणि-पुण्यपापोदासीनकर्माणि ॥

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥ तथा हस्तसंयोगाच्च मुसले कर्म ॥ २ ॥ अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ ३ ॥ तथात्मसंयोगो हस्तकर्मणि ॥ ४ ॥ अभिघातान्मुसलसंयोगाद्धस्ते कर्म ॥ ५ ॥ आत्मकर्म हस्तसंयो-

गाच्च ॥ ६ ॥ संयोगाभावे गुरुत्वात्पतनम् ॥ ७ ॥ नोदने विशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् ॥ ८ ॥ प्रयत्नविशेषान्नोदनविशेषः ॥ ९ ॥ नोदनविशेषादुदसनविशेषः ॥ १० ॥ हस्तकर्मणा दारककर्म व्याख्यातम् ॥ ११ ॥ तथा दग्धस्य विस्फोटने ॥ १२ ॥ (प्र)यत्नभावे प्रसुप्तस्य चलनम् ॥ १३ ॥ तृणे कर्म वायुसंयोगात् ॥ १४ ॥ मणिगमनं सूच्यभिसर्पणमदृष्टकारणम् ॥ १५ ॥ इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे

हेतुः ॥ १६ ॥ नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥ १७ ॥ संस्काराभावे गुरुत्वात्पतनम् ॥ १८ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने पञ्चमाध्यायस्य प्रथममाह्निकम् ॥५॥१॥

---

चोदनादिनिष्पाद्यकर्माणि ॥

नोदनाभिघातात्संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥ १ ॥ तद्विशेषेणादृष्टकारितम् ॥ २ ॥ अपां संयोगाभावे गुरुत्वात्पतनम् ॥ ३ ॥ द्रवत्वात्स्यन्दनम् ॥ ४ ॥ नाड्यो

वायुसंयोगादारोहणम् ॥ ५ ॥ नोदनापीडनात्संयुक्तसंयोगाच्च ॥ ६ ॥ वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥७॥ अपां संघातो विलयनं च तेजस्संयोगात् ॥ ८ ॥ तत्र विस्फूर्जथुर्लिङ्गम् ॥ ९ ॥ वैदिकं च ॥१०॥ अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥११॥ पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ १२ ॥ अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥ १३ ॥ हस्तकर्मणा मनसः कर्म व्याख्या-

**म् ॥ १९ ॥ व्यवस्थातो नाना ॥ २० ॥ शास्त्रसामर्थ्याच्च ॥ २१ ॥**

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ ३ ॥२ ॥ आत्मान्तःकरणलक्षणं नाम तृतीयोऽध्यायः समाप्तः ॥

# अथ चतुर्थोऽध्यायः ।

शरीरतदुपयोगिनोर्विवेचनम् ॥ परमाणूनां मूलकारणत्वादिवर्णनं प्रकृतेर्मूलकारणत्वानिरासाय ॥

**सदकारणवन्नित्यम् ॥ १ ॥ तस्य कार्यं लिंगम् ॥ २ ॥ कारणा-**

भावात्कार्यभावः ॥ ३ ॥ अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४ ॥ अविद्या ॥ ५ ॥ महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः ॥ ६ ॥ सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः ॥ ७ ॥ अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥ ८ ॥ तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ ९ ॥ तस्याभावादव्यभिचारः।१०। सङ्ख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसम-

वायाव्याक्षुषाणि ॥ ११ ॥ अद्भिप्स्वचाक्षुषाणि ॥ १२ ॥ एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ॥ १३ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने चतुर्थाध्यायस्य प्रथममाह्निकम् ॥ ४ ॥ १ ॥

कार्यद्रव्यविभागः ॥

तत्पुनः पृथिव्यादिकार्यं द्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥ १ ॥ प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात्पञ्चात्मकं न विद्यते ॥ २ ॥

गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ ३ ॥ अणुसंयोगस्त्वप्रतिषिद्धः ॥ ४ ॥ तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥ ५ ॥ अनियतदिग्देशपूर्वकत्वात् ॥ ६ ॥ धर्मविशेषाच्च ॥ ७ ॥ समाख्याभावाच्च ॥ ८ ॥ संज्ञाया अनादित्वात् ॥ ९ ॥ सन्त्ययोनिजाः ॥ १० ॥ वेदलिङ्गाच्च ॥ ११ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने चतुर्थोध्यायस्य द्वितीयमाह्निकम् ॥ ४ ॥ २ ॥

शरीरतदुपयोगिविवेचनं नाम समासश्चायं चतुर्थोऽध्यायः ॥

# अथ पञ्चमोऽध्यायः ।

कर्मपरीक्षा ॥

प्रयत्ननिष्पाद्यकर्मपरिक्षा उत्क्षेपणम्-अप्रयत्नोत्क्षेपणं-पुण्यहेतुककर्माणि-पुण्यपापोदासीनकर्माणि ॥

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥ तथा हस्तसंयोगाच्च मुसले कर्म॥ २॥ अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ ३ ॥ तथात्मसंयोगो हस्तकर्मणि ॥ ४ ॥ अभिघातान्मुसलसंयोगाद्धस्ते कर्म ॥ ५ ॥ आत्मकर्म हस्तसंयो-

गाच्च ॥ ६ ॥ संयोगाभावे गुरुत्वा-त्पतनम् ॥ ७ ॥ नोदने विशेषाभा-वान्नोर्ध्वं न तिर्यग्गमनम् ॥ ८ ॥ प्रयत्नविशेषान्नोदनविशेषः ॥ ९ ॥ नोदनविशेषादुदसनविशेषः ॥ १० ॥ हस्तकर्मणा दारककर्म व्याख्यातम् ॥ ११ ॥ तथा दग्धस्य विस्फोटने ॥ १२ ॥ (प्र)यत्नभावे प्रसुप्तस्य च-लनम् ॥ १३ ॥ तृणे कर्म वायुसं-योगात् ॥ १४ ॥ मणिगमनं सूच्य-भिसर्पणमदृष्टकारणम् ॥ १५ ॥ इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे

हेतुः ॥ १६ ॥ नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥ १७ ॥ संस्काराभावे गुरुत्वात्पतनम् ॥ १८ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने पञ्चमाध्यायस्य प्रथममाह्निकम् ॥५॥१॥

---

चोदनादिनिष्पाद्यकर्माणि ॥

नोदनाभिघातात्संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥ १ ॥ तद्विशेषेणादृष्टकारितम् ॥ २ ॥ अपां संयोगाभावे गुरुत्वात्पतनम् ॥ ३ ॥ द्रवत्वात्स्यन्दनम् ॥ ४ ॥ नाड्यो

वायुसंयोगादारोहणम् ॥ ५ ॥ नोदनापीडनात्संयुक्तसंयोगाच्च ॥ ६ ॥ वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥७॥ अपां संघातो विलयनं च तेजस्संयोगात् ॥ ८ ॥ तत्र विस्फूर्जथुर्लिङ्गम् ॥ ९ ॥ वैदिकं च ॥१०॥अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥११॥ पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ १२ ॥ अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥ १३ ॥ हस्तकर्मणा मनसः कर्म व्याख्या-

तम् ॥ १४ ॥ आत्मेन्द्रियमनोर्थसन्निक-
र्षात्सुखदुःखे ॥ १५ ॥ तदनारम्भ
आत्मस्थे मनसि शरीरस्य दुःखाभावः
स योगः ॥ १६ ॥ अपसर्पणमुप-
सर्पणमशितपीतसंयोगाः कार्यान्त-
रसंयोगाश्चेत्यदृष्टकारितानि ॥ १७ ॥
तदभावे संयोगाभावोऽप्रादुर्भावश्च
मोक्षः ॥ १८ ॥ द्रव्यगुणकर्मनिष्प-
त्तिवैधर्म्यादभावस्तमः ॥ १९ ॥
तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥
दिक्कालावाकाशं च क्रियावद्वैधर्म्या-
न्निष्क्रियाणि ॥ २१ ॥ एतेन कर्माणि
गुणाश्च व्याख्याताः ॥ २२ ॥ नि-

ष्क्रियाणां समवायः कर्मभ्यो निषिद्धः ॥ २३ ॥ कारणं त्वसमवायिनो गुणाः ॥ २४ ॥ गुणैर्दिग्व्याख्याता ॥ २५ ॥ कारणेन कालः ॥ २६ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥ ५ ॥ २ ॥

कर्मप्रतिपादनं नाम समाप्तश्च

पंचमोऽध्यायः ॥



# अथ षष्ठोऽध्यायः।

श्रौतधर्मपरीक्षा ( संसारमूलयोः धर्माधर्मयोः परीक्षा)॥ धर्ममूलस्य वेदस्य प्रामाण्योपपादनाय गुणजन्यत्वस्य धर्मे साधनम् ॥

बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ १ ॥

ब्राह्मणे संज्ञाकर्म सिद्धिलिंगम् ॥ २ ॥ बुद्धिपूर्वो ददातिः ॥ ३ ॥ तथा प्रतिग्रहः ॥ ४ ॥ आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥ ५ ॥ तद्दुष्टभोजने न विद्यते ॥ ६ ॥ दुष्टं हिंसायाम् ॥ ७ ॥ तस्य समभिव्याहारतो दोषः ॥ ८ ॥ तददुष्टे न विद्यते ॥ ९ ॥ पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥ समे हीने वा प्रवृत्तिः ॥ ११ ॥ एतेन हीनसमविशिष्टधार्मिकेभ्यः पर-

स्यादानं व्याख्यातम् ॥ १२ ॥ तथा विरुद्धानां त्यागः ॥ १३ ॥ हीने परे त्यागः ॥ १४ ॥ समे आत्मत्यागः परत्यागो वा ॥ १५ ॥ विशिष्टे आत्मत्याग इति ॥ १६ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने षष्ठाध्यायस्य प्रथममाह्निकम् ॥ ६ ॥ १ ॥

---

विशेषतो धर्मपरीक्षार्थं दृष्टादृष्टानां कर्मणां फलविवेचनम् ॥

दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १ ॥ अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्र-

स्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकाल नियमाश्चादृष्टाय ॥ २ ॥ चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ ॥ भावदोष उपधादोषोऽनुपधा ॥ ४ ॥ यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥ ५ ॥ अशुचीति शुचिप्रतिषेधः ॥ ६ ॥ अर्थान्तरं च ॥ ७ ॥ अयतस्य शुचिभोजनाभ्युदयो न विद्यते नियमाभावाद्विद्यते वार्थान्तरत्वाद्यमस्य ॥ ८ ॥ असति चाभावात् ॥ ९ ॥ सुखाद्रागः ॥ १० ॥ तन्मयत्वाच्च ॥ ११ ॥

अदृष्टाच्च ॥ १२ ॥ जातिविशेषाच्च ॥ १३ ॥ इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः ॥ १४ ॥ तत्संयोगो विभागः ॥ १५ ॥ आत्मगुणकर्मसु मोक्षो व्याख्यातः ॥ १६ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने षष्ठाध्यायस्य द्वितीयमाह्निकम् ॥ ६ ॥ २ ॥ श्रौतधर्मविवेचनं नाम समाप्तश्च षष्ठोऽध्यायः ॥

# अथ सप्तमोऽध्यायः ।

गुणत्वेन गुणपरीक्षा ॥ ( गुणसमवाययोः प्रतिपादनम् ) ॥

गुणानामुद्देशो लक्षणं च—नित्यतया गुण-

परीक्षा--अनित्यतया गुणपरीक्षा--पाकजगुण-परीक्षा--संख्याद्यनेकवृत्तिगुणपरीक्षा--परिमाणपरीक्षा च ॥

**उक्ता गुणाः ॥ १ ॥ पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥ २ ॥ एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥ अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात्॥ ४ ॥ अनित्येष्वनित्या द्रव्यानित्यत्वात्५ ॥ कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥ एकद्रव्यत्वात् ॥ ७ ॥ अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये**

व्याख्याते ॥ ८ ॥ कारणबहुत्वाच्च ॥ ९ ॥ अतो विपरीतमणु ॥ १० ॥ अणु महदिति तस्मिन्विशेषभावाद्विशेषाभावाच्च ॥ ११ ॥ एककालत्वात् ॥ १२ ॥ दृष्टान्ताच्च ॥ १३ ॥ अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥ १४ ॥ कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥ १५ ॥ अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ १६ ॥ एतेन ह्रस्वत्वदीर्घत्वे व्याख्याते ॥ १७ ॥ अनित्येऽनित्यम् ॥ १८ ॥ नित्ये नित्यम् ॥ १९ ॥ नित्यं परि-

मण्डलम् ॥ २० ॥ अविद्या च लिं-गम् ॥ २१ ॥ विभवान्महानाकाश-स्तथा चात्मा ॥ २२ ॥ तदभावादणु मनः॥२३॥गुणैर्दिग्व्याख्याता ॥२४॥ कारणे कालः ॥ २५ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकद-र्शने सप्तमाध्यायस्य प्रथममाह्निकम् ॥७॥१॥

---

एकानेकवृत्तिगुणपरीक्षा—अनेकमात्रवृत्ति-गुणपरीक्षा—शब्दार्थसम्बन्धपरीक्षा—विशेषगु-णरहितविभुसंयोगसमवायिकारणकैकवृत्तिगु-णपरीक्षा—समवायपरीक्षा च ॥

रूपरसगन्धस्पर्शव्यतिरेकादर्थान्त-रमेकत्वम्॥१॥तथा पृथक्त्वम् ॥२॥

एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वा-
भावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ।३।
निःसङ्ख्यत्वात् कर्मगुणानां सर्वैकत्वं
न विद्यते ॥ ४ ॥ भ्रान्तं तत् ॥ ५ ॥
एकत्वाभावाद्भक्तिस्तु न विद्यते॥६॥
कार्यकारणयोरेकत्वैकपृथक्त्वभावादे-
कत्वैकपृथक्त्वं न विद्यते॥७॥ एतद-
नित्ययोर्व्याख्यातम् ॥ ८ ॥ अन्यत-
रकर्मज उभयकर्मजसंयोगजश्च सं-
योगः ॥ ९ ॥ एतेन विभागो व्या-
ख्यातः ॥ १० ॥ संयोगविभागयोस्सं-
योगविभागाभावोऽणुत्वमहत्त्वाभ्यां

व्याख्यातः ॥ ११॥ कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ।१२। युतसिद्ध्यभावात्कार्यकारणयोस्संयोगविभागौ न विद्येते ॥ १३॥गुणत्वात् ॥१४॥गुणोऽपि विभाव्यते॥१५॥ निष्क्रियत्वात् ॥ १६ ॥ असति नास्तीति च प्रयोगात् ॥ १७ ॥शब्दार्थावसम्बन्धौ ॥ १८ ॥ संयोगिनो दण्डात्समवायिनो विशेषाच्च ॥ १९॥ सामयिकः शब्दार्थप्रत्ययः ॥ २० ॥ एकदिक्कालाभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ॥२१॥

कारणपरत्वात्कारणापरत्वाच्च ॥२२॥ परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ २३ ॥ कर्मभिः कर्माणि ॥ २४ ॥ गुणैर्गुणाः ॥२५॥ इहेदमिति यतः कार्यकारणयोः स ( समवायः ) ॥ २६ ॥ द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥ २७ ॥ तत्त्वं भावेन ॥ २८ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने सप्तमाध्यायस्य द्वितीयमाह्निकम् ॥७॥२॥

गुणसमवाययोर्निरूपणं नाम समाप्तश्च सप्तमोऽध्यायः ॥



# अथाष्टमोऽध्यायः ।

ज्ञानोत्पत्तितन्निदानयोर्निरूपणम् ॥

बुद्धिपरीक्षा—लौकिकसन्निकर्षजन्यसविकल्पकनिर्विकल्पकज्ञान(बुद्धि )निष्पत्तिक्रमः ॥

द्रव्येषु ज्ञानं व्याख्यातम् ॥ १ ॥ तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥ ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३॥ गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥ ४ ॥ सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ॥ ५॥ सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥ ६ ॥ द्रव्ये द्रव्यगुणक-

मापेक्षम् ॥ ७ ॥ गुणकर्मसु गुणकर्मा-
भावाद्गुणकर्मापेक्षं न विद्यते ॥ ८ ॥
समवायिनश्श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते
बुद्धिस्ते एते कार्यकारणभूते ॥ ९ ॥
द्रव्येष्वनितरेतरकारणाः ॥ १० ॥
कारणायौगपद्यात्कारणक्रमाच्च घटपटा
दिबुद्धीनां क्रमो न हेतुफलभावात् ११

इति श्रीकणादमहर्षिप्रणीते वैशेषिकद-
र्शनेऽष्टमाध्यायस्य प्रथममाह्निकम् ॥८॥१॥

---

( सन्निकर्षजलौकिक ) विशिष्टवैशिष्ट्यावा-
हिप्रत्यक्षज्ञान ( बुद्धि ) निरूपणम् ॥

अयमेष त्वया कृतं भोजयैनमिति
बुद्ध्यपेक्षम् ॥ १ ॥ दृष्टेषु भावाददृ-

ष्टेष्वभावात् ॥ २ ॥ अर्थ इति द्रव्य-
गुणकर्मसु ॥३ ॥ द्रव्येषु पञ्चात्मकत्वं
प्रतिषिद्धम् ॥ ४ ॥ भूयस्त्वाद्गन्धव-
त्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः॥५॥
तथापस्तेजो वायुश्च रसरूपस्पर्शावि-
शेषात् ॥ ६ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकद-
र्शनेऽष्टमाध्यायस्य द्वितीयमाह्निकम् ॥८ ॥२॥

ज्ञानोत्पत्तितन्निदानादिनिरूपणं
नाम समाप्तश्चाष्टमोऽध्यायः ॥

# अथ नवमोऽध्यायः ।

बुद्धिविशेषोपपादनम् ( प्रत्यासत्तिजन्यलौ-
किकप्रत्यक्षोपपादनम् ) ॥

कारणतः स्वरूपतो लक्षणतश्च योगिप्रत्य-क्षस्य-अयोगिप्रत्यक्षस्य च निरूपणं प्रत्यक्षलै-ङ्गिकभेदेन प्रमाणस्य द्विधा विभागश्च ॥

क्रियागुणव्यपदेशाभावात्प्रागस-त् ॥ १ ॥ सदसत् ॥ २ ॥ असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ३॥ सच्चासत् ॥ ४ ॥ यच्चान्यदसदतस्त-दसत् ॥ ५ ॥ असदिति भूतप्रत्यक्षा-भावाद्भूतस्मृतेर्विरोधिप्रत्यक्षवत् ।६। तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥ एतेनाघटोऽगौरधर्मश्च व्याख्यातः८॥

अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥ नास्ति घटो गेहमिति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥ १० ॥ आत्मन्यात्ममनसोस्संयोगविशेषादात्मप्रत्यक्षम् ॥११॥ तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥ १२ ॥ असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च॥१३ तत्समवायात्कर्मगुणेषु ॥ १४ ॥ आत्मसमवायादात्मगुणेषु ॥ १५ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने नवमाध्यायस्य प्रथममाह्निकम् ॥९॥१ ॥

लैङ्गिकज्ञानस्य ( अनुमानस्य ) निरूपणम् ॥

अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥ अस्येदं कार्यकारणसम्बन्धश्चावयवाद्भवति ॥ २ ॥ एतेन शाब्दं व्याख्यातम् ॥ ३ ॥ हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥ ४॥ अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥५॥ आत्ममनसोस्संयोगविशेषात्संस्काराच्च स्मृतिः ॥ ६ ॥ तथा स्वप्नः ॥७॥ स्वप्नान्तिकम् ॥८॥ धर्माच्च ॥९॥ इन्द्रियदोषात्संस्कारदोषाच्चाविद्या ॥१०॥ तद्दुष्टं

ज्ञानम् ॥ ११॥ अदुष्टं विद्या ॥१२॥ आर्षं सिद्धदर्शनं च धर्मेभ्यः॥ १३ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने नवमाध्यायस्य द्वितीयमाह्निकम् ॥ ९ ॥ २ ॥ बुद्धिविशेषप्रतिपादनं नाम समाप्तश्च नवमोध्यायः ॥

# अथ दशमोऽध्यायः ।

आत्मगुणानां कारणतो भेदव्युत्पादनम् ।

सुखदुःखपरीक्षा ॥

इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथस्सुखदुःखयोरर्थान्तराभावः ॥१॥ संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥ तयोर्निष्पत्तिः प्रत्य-

लैङ्गिकाभ्याम् ॥ ३॥ अभूदित्यपि ॥ ४ ॥ सति च कार्यादर्शनात् ॥५॥ एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ६ ॥ एकदेश इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ॥ ७ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने दशमाध्यायस्य प्रथममाह्निकम् ॥ १० ॥ १ ॥

---

समवायादिकारणत्रयनिरूपणम् ॥

कारणमिति द्रव्ये कार्यसमवायात् ॥ १ ॥ संयोगाद्वा ॥ २ ॥ कारणे समवायात्कर्माणि ॥ ३ ॥ तथा रूपे कारणैकार्थसमवायाच्च ॥ ४ ॥ कारणे समवा-

यात्संयोगः पटस्य ॥ ५ ॥ कारणका- रणसमवायाच्च ॥ ६ ॥ संयुक्तसमवाया द्ग्नेर्वैशेषिकम् ॥ ७ ॥ दृष्टानां दृष्टप्र- योजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥ ८ ॥ तद्वचनादाम्नायस्य प्रामाण्य- मिति ॥ ९ ॥

इति श्रीकणादमहर्षिप्रणीते वैशेषिकदर्शने दशमाध्यायस्य द्वितीयमाह्निकम् ॥ १० ॥२॥

संहत्य सूत्राणि ( ३७० )
आत्मगुणभेदप्रतिपादनं नाम
समाप्तोयं दशमोऽध्यायश्च ॥

## इति वैशेषिकदर्शनं समाप्तम् ॥

श्रीरस्तु ।

श्रीकपिलमहर्षिप्रणीतं

# साङ्ख्यप्रवचन-
# दर्शनम् ।

श्रीकृष्णदासात्मज-गङ्गाविष्णुना
स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९८२, शकाब्दाः १८४७.

कल्याण-मुंबई.

॥ श्रीः ॥

श्रीकपिलमहर्षिप्रणीतं

# साङ्ख्यप्रवचनदर्शनम् ।



अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥ १ ॥ न दृष्टात्तत्सिद्धिर्निवृत्तेप्यनुवृत्तिदर्शनात् ॥ २ ॥ प्रात्यहिकक्षुत्प्रतीकारवत्तत्प्रतीकारचे-

---

१ अत्रस्या भाष्यकारिकैतदध्यायान्ते स्पष्टा ।

ष्टनात्पुरुषार्थत्वम् ॥ ३ ॥ सर्वासम्भवात्सम्भवेऽपि सत्तासम्भवाद्धेयः प्रमाणकुशलैः ॥ ४ ॥ उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥ अविशेषश्चोभयोः ॥६॥ न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥७॥ स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥ ८ ॥ नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ॥ ९ ॥

---

१ ४,५,६, सूत्राणि भाष्यपुस्तकेऽत्र एतदस संख्याकविचित्रत्वादिसूत्रोत्तरं व्याख्यातानीति तथा पाठोऽपि क्वचित् प्राचीनमूलपुस्तके त्वेवमेव पाठः ।

शुक्लपटवद्बीजवच्चेत् ॥१०॥ शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥११॥ न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥ १२ ॥ न देशयोगतोऽप्यस्मात् ॥ १३ ॥ नावस्थातो देहधर्मत्वात्तस्याः ॥ १४ ॥ असंगोऽयं पुरुष इति ॥ १५ ॥ न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥ विचित्रभोगानुपपत्तिरन्यधर्मत्वे ॥१७॥

---

१ इत उत्तरं ४, ५, ६, सूत्राणि सर्वासित्यादीनि भाष्ये इति क्वचिदेवमपि पाठः। सटिप्पणे प्राचीनमूलपुस्तके तु नात्र पाठः। किंतु प्रागेव।

प्रकृतिनिबन्धनाच्चेन्न तस्या अपि पारतन्त्र्यम् ॥ १८ ॥ न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ॥ १९ ॥ नाविद्यातोऽप्यवस्तुना बन्धायोगात् ॥ २० ॥ वस्तुत्वे सिद्धान्तहानिः ॥ २१ ॥ विजातीयद्वैतापत्तिश्च ॥ २२ ॥ विरुद्धोभयरूपा चेत् ॥ २३ ॥ न तादृक् पदार्थाप्रतीतेः ॥ २४ ॥ न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ॥ २५ ॥ अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् ॥ २६ ॥

नाऽनादिविषयोपरागनिमित्तकोऽप्यस्य ॥ २७ ॥ न बाह्याभ्यन्तरयोरुपर- ञ्ज्योपरञ्जकभावोऽपि देशव्यवधानात् स्रुघ्नस्थपाटलिपुत्रस्थयोरिव ॥ २८ ॥ द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ॥ २९ ॥ अदृष्टवशाच्चेत् ॥ ३० ॥ न द्वयोरेककालायोगादुपकार्योपकारक- भावः ॥ ३१ ॥ पुत्रकर्मवदिति चेत् ॥ ३२ ॥ नास्ति हि तत्र स्थिर

१ निमित्तक इति क्वचित् पाठः ।
२ उपरञ्ज्योपेति क्वचित् पाठः ।
३ हिशब्दरहितः क्वचित् पाठः ।

एकात्मा यो गर्भाधानादिना संस्क्रियते ॥ ३३ ॥ स्थिरकार्यासिद्धेः क्षणिकत्वम् ॥३४॥ न प्रत्यभिज्ञाबाधात् ॥ ३५ ॥ श्रुतिन्यायविरोधाच्च ॥ ३६ ॥ दृष्टान्तासिद्धेश्च ॥ ३७ ॥ युगपज्जायमानयोर्न कार्यकारणभावः ॥ ३८ ॥ पूर्वापाये उत्तरायोगात् ॥ ३९ ॥ तद्भावे तदयोगादुभयव्यभिचारादपि न ॥ ४० ॥ पूर्वभावमात्रे न नियमः ॥ ४१ ॥ न विज्ञानमात्रं बाह्यप्रतीतेः ॥ ४२ ॥ तदभावे तदभावाच्छून्यं तर्हि ॥४३॥

शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य ॥ ४४ ॥ अपवादमात्रमबुद्धानाम् ॥ ४५ ॥ उभयपक्षसमानक्षेमत्वादयमपि ॥ ४६ ॥ अपुरुषार्थत्वमुभयथा ॥ ४७ ॥ न गतिविशेषात् ॥ ४८ ॥ निष्क्रियस्य तदसम्भवात् ॥ ४९ ॥ मूर्तत्वाद्घटादिवत्समानधर्मापत्तावपसिद्धान्तः ॥ ॥ ५० ॥ गतिश्रुतिरप्युपाधियोगादाकाशवत् ॥ ५१ ॥ न कर्मणाप्यतद्धर्मत्वात् ॥ ५२ ॥ अतिप्रसक्तिरन्यधर्मत्वे ॥ ५३ ॥ निर्गुणादिश्रुति-

विरोधश्चेति ॥ ५४ ॥ तद्योगोऽप्य-
विवेकान्न समानत्वम् ॥ ५५ ॥ निय-
तकारणात्तदुच्छित्तिर्ध्वान्तवत् ॥५६॥
प्रधानाविवेकादन्याविवेकस्य तद्धाने
हानम् ॥ ५७ ॥ वाङ्मात्रं न तु तत्त्वं
चित्तस्थितेः ॥ ५८ ॥ युक्तितोऽपि न
बाध्यते दिङ्मूढवदपरोक्षादृते ॥५९॥
अचाक्षुषाणामनुमानेन बोधो धूमा-
दिभिरिव वह्नेः ॥ ६० ॥ सत्त्वरजस्तमसां
साम्यावस्था प्रकृतिः, प्रकृतेर्महान्मह-
तोऽहङ्कारोऽहङ्कारात्पञ्चतन्मात्राण्युभय

१ विरुद्धश्चेति क्वचित् पाठः ।

मिन्द्रियं, तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः ॥६१॥ स्थूलात्पञ्चतन्मात्रस्य॥६२॥ बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य ॥६३॥ तेनान्तःकरणस्य ॥ ६४ ॥ ततः प्रकृतेः॥६५॥ संहतपरार्थत्वात्पुरुषस्य ॥ ६६ ॥ मूले मूलाभावादमूलं मूलम् ॥ ६७ ॥ पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ॥ ६८ ॥ समानः प्रकृतेर्द्वयोः ॥ ६९ ॥ अधिकारित्रैविध्यान्न नियमः ॥ ७० ॥ महदाख्यमाद्यं कार्यं तन्मनः ॥ ७१॥ चर-

मोऽहङ्कारः ॥ ७२ ॥ तत्कार्यत्वमुत्तरेषाम् ॥ ७३ ॥ आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ॥ ७४ ॥ पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ॥ ७५ ॥ परिच्छिन्नं न सर्वोपादानम् ॥ ७६ ॥ तदुत्पत्तिश्रुतेश्च ॥ ७७ ॥ नावस्तुनो वस्तुसिद्धिः ॥ ७८ ॥ अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥ ७९ ॥ भावे तद्योगेन तत्सिद्धिरभावे तदभावात्

१ अन्येषामिति क्वचित्पाठः ।

२ नेत्यादावेव क्वचित्पाठः, न मध्ये ।

कुतस्तरां तत्सिद्धिः ॥ ८० ॥ न कर्मण उपादानत्वायोगात् ॥ ८१ ॥ नानुश्रविकादपि तत्सिद्धिस्साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ॥ ८२ ॥ तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ।८३। दुःखाद्दुःखं जलाभिषेकवन्न जाड्यविमोकः ॥ ८४ ॥ काम्येऽकाम्येपि साध्यत्वाविशेषात् ॥ ८५ ॥ निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् ॥ ८६ ॥ द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा त-

---

१ उपादानायोगादिति क्वचित्पाठः ।

त्साधकतमं यत्तात्त्रिविधं प्रमाणम् ॥ ८७ ॥ तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥ ८८ ॥ यत्सम्बद्धं सत्तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम् ॥ ८९ ॥ योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥ ९० ॥ लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः ॥ ९१ ॥ ईश्वरासिद्धेः ॥ ९२ ॥ मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥ ९३ ॥ उभयथाप्यसत्करत्वम् ॥ ९४ ॥ मुक्तात्मनः प्रशंसोपासासिद्धस्य वा ॥ ९५ ॥

१ मुक्तामुक्तयोरिति क्वचित्पाठः ।

तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥ ९६ ॥ विशेषकार्येष्वपि जीवानाम् ॥ ९७ ॥ सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥ ९८ ॥ अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥ ९९ ॥ प्रतिबन्धदृशः[1] प्रतिबद्धज्ञानमनुमानम् ॥ १०० ॥ आप्तोपदेशश्शब्दः ॥ १०१ ॥ उभयसिद्धिः प्रमाणात्तदुपदेशः ॥ १०२ ॥ सामान्यतो दृष्टादुभयसिद्धिः ॥ १०३ ॥

---

१ प्रतिबद्धदृश इति क्वचित्पाठः । व्याप्तिज्ञानवत इति तस्यार्थ इत्यप्यन्यत्र ।

च्चिदवसानो भोगः ॥ १०४ ॥ अक-
र्तुरपि फलोपभोगोऽन्नाद्यवत् ॥ १०५ ॥
अविवेकाद्वा तत्सिद्धेः कर्तुः फलाव-
गमः ॥ १०६ ॥ नोभयं च तत्त्वा-
ख्याने ॥ १०७ ॥ विषयोऽविषयो-
प्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य
॥ १०८ ॥ सौक्ष्म्यात्तदनुपल-
ब्धिः ॥ १०९ ॥ कार्यदर्शनात्तदुप-
लब्धेः ॥ ११० ॥ वादिविप्रतिपत्ते-
स्तदसिद्धिरिति चेत् ॥ १११ ॥
तथाप्येकतरदृष्टचैकतरसिद्धेर्नापलापः
॥ ११२ ॥ त्रिविधविरोधा-

पत्तेश्च ॥ ११३ ॥ नासदुत्पादो नृशृङ्गवत् ॥ ११४ ॥ उपादाननियमात् ॥ ११५ ॥ सर्वत्र सर्वदा सर्वसम्भवात् ॥ ११६ ॥ शक्तस्य शक्यकरणात् ॥ ११७ ॥ कारणभावाच्च॥ ११८ ॥ न भावे भावयोगश्चेत् ॥ ११९ ॥ नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥ १२० ॥ नाशः कारणलयः ॥ १२१ ॥ पारम्पर्यतोऽन्वेषणा बीजाङ्कुरवत् ॥ १२२ ॥ उत्पत्तिवद्वाऽदोषः

---

१ उत्पत्तिवददोष इति क्वचित्पाठः ।

॥ १२३ ॥ लिङ्गम् ॥१२४॥ आज्ञ-स्याद्भेदतो वा गुणसामान्यादेस्त-त्सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५॥ ( तथा प्रधानशब्दात् ) ॥१२६॥त्रि-गुणचेतनत्वादि द्वयोः ॥ १२७ ॥ प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यं वैधर्म्यम् ॥ १२८ ॥ लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम्॥१२९॥ उभयान्यत्वात् कार्यत्वं महदादेर्घटा-

---

१ हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् इति क्वचित्पाठः ।

२ इदं सूत्रं क्वचिन्न दृश्यते, प्राचीनलेखे तु परं दृश्यते ।

दिवत् ॥१३०॥ परिमाणात् ॥१३१॥ समन्वयात् ॥ १३२ ॥ शक्तितश्चेति ॥ १३३ ॥ तद्धाने प्रकृतिः पुरुषो वा ॥ १३४ ॥ तयोरन्यत्वे तुच्छत्वम् ॥१३५॥ कार्यात्कारणानुमानं तत्साहित्यात् ॥ १३६ ॥ अव्यक्तं त्रिगुणाल्लिङ्गात् ॥ १३७ ॥ तत्कार्यतस्तत्सिद्धेर्नापलापः ॥ १३८ ॥ सामान्येन विवादाभावाद्धर्मवन्न साधनम् ॥१३९॥ शरीरादिव्यतिरिक्तः पुमान् ॥१४०॥ संहतपरार्थत्वात् ॥१४१॥ त्रिगुणादिविपर्ययात् ॥ १४२ ॥

अधिष्ठानाच्चेति ॥ १४३ ॥ भोक्तृभावात् ॥ १४४ ॥ कैवल्यार्थं प्रवृत्तेश्च ॥ १४५ ॥ जडप्रकाशायोगात् प्रकाशः ॥ १४६ ॥ निर्गुणत्वान्न चिद्धर्मा ॥ १४७ ॥ श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् ॥ १४८ ॥ सुषुप्त्याद्यसाक्षित्वम् ॥ १४९ ॥ जन्मादिव्यवस्थातः पुरुषबहुत्वम् ॥ १५० ॥ उपाधिभेदेप्येकस्य नानायोग आकाशस्येव घटादिभिः ॥ १५१ ॥ उपाधिर्भिद्यते न तु तद्वान् ॥ १५२ ॥ एवमेकत्वेन

१ अधिष्ठातृत्वाच्चेति क्वचित्पाठः ।

२ कैवल्यार्थं इति क्वचित्पाठः ।

परिवर्त्तमानस्य न विरुद्धधर्माध्यासः ॥ १५३ ॥ अन्यधर्मत्वेपि नारोपात्तत्सिद्धिरेकत्वात् ॥ १५४ ॥ नाद्वैतश्रुतिविरोधो जातिपरत्वात् ॥१५५॥ विदितबन्धकारणस्य दृष्ट्या तद्रूपम् ॥ १५६ ॥ नान्धदृष्ट्या चक्षुष्मतामनुपलम्भः ॥ १५७ ॥ वामदेवादिर्मुक्तो नाद्वैतम् ॥१५८ ॥ अनादावद्य यावदभावाद्भविष्यदप्येवम् ॥ १५९ ॥ इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥१६०॥ व्यावृत्तोभयरूपः॥१६१॥ साक्षात्सम्बन्धात्साक्षित्वम्॥ १६२ ॥

नित्यंमुक्तत्वम् ॥ १६३ ॥ औदासी-न्यं चेति ॥ १६४ ॥ उपरागात्कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात् ।१६५।

भाष्यकारिका-हेयहाने तयोर्हेतू चेति व्यूहा यथाक्रमम् । चत्वारश्शास्त्रमुख्यार्था अध्यायेऽस्मिन्प्रपञ्चिताः ॥ १ ॥

इति श्रीकपिलमहर्षिप्रणीते साङ्ख्यप्रवचनदर्शने विषयाध्यायः प्रथमस्समाप्तः ॥ १ ॥

---

विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ॥१॥ विरक्तस्य तत्सिद्धेः॥२॥ न श्रव-

---

१ योगाविभागमन्तरा नित्यमुक्तत्वमौदासीन्यं चेत्यनयोरकसूत्रत्वं क्वचिद्दृश्यते ।

णमात्रात्तत्सिद्धिरनादिर्वासनाया बल-
वत्त्वात् ॥ ३ ॥ बहुभृत्यवद्वा प्रत्ये-
कम् ॥ ४ ॥ प्रकृतिवास्तवे च पुरुष-
स्याध्याससिद्धिः ॥ ५ ॥ कार्यतस्त-
त्सिद्धेः ॥ ६ ॥ चेतनोद्देशान्नियमः
कण्टकमोक्षवत् ॥ ७॥ अन्ययोगेऽपि
तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥ ८ ॥
रागविरागयोर्योगः सृष्टिः ॥ ९ ॥
महदादिक्रमेण पञ्चभूतानाम् ॥ १०॥
आत्मार्थत्वात्सृष्टेर्नैषामात्मार्थ आर-
म्भः ॥ ११॥ दिक्कालावाकाशादिभ्यः

१ अनादिर्वासनापटुत्वादिति क्वचित्पाठः ।

॥ १२ ॥ अध्यवसायो बुद्धिः ॥ १३ ॥ तत्कार्यं धर्मादि ॥ १४ ॥ महदुपरागाद्विपरीतम् ॥ १५ ॥ अभिमानोऽहङ्कारः ॥ १६ ॥ एकादश पञ्चतन्मात्रं यत्कार्यम् ॥ १७ ॥ सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात् ॥ १८ ॥ कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥ १९ ॥ आहङ्कारिकत्वश्रुतेर्न भौतिकानि ॥ २० ॥ देवतालयश्रुतिर्नारम्भकस्य ॥ २१ ॥ तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च ॥ २२ ॥ अतीन्द्रिय-

१ तत्कार्यमिति क्वचित्पाठः ।

मिन्द्रियं भ्रान्तानामधिष्ठाने ॥ २३ ॥ शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ।२४। न कल्पनाविरोधः प्रमाणदृष्टस्य ।२५। उभयात्मकं च मनः ॥ २६ ॥ गुणपरिणामभेदान्नानात्वमवस्थावत् ।२७। रूपादिरसमलान्त उभयोः ॥ २८ ॥ द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ॥ २९ ॥ त्रयाणां स्वालक्षण्यम् ॥ ३० ॥ सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्च ॥ ३१ ॥ क्रमशोऽक्रमशश्चेन्द्रियवृत्तयः (त्तिः) ॥ ३२ । वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ३३ ॥

तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥ ३४ कुसुमवच्च मणिः ॥ ३५ ॥ पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ॥ ३६ ॥ धेनुवद्वत्साय ॥ ३७ ॥ करणं त्रयोदशविधमवान्तरभेदात् ॥ ३८॥ इन्द्रियेषु साधकतमत्वगुणयोगात्कुठारवत् ॥ ३९॥ द्वयोः प्रधानं मनोलोकवद्भृत्यवर्गेषु ॥ ४० ॥ अव्यभिचारात् ॥ ४१ ॥ तथाऽशेषसंस्काराधारत्वात् ॥४२॥ स्मृत्याऽनुमानाच्च ॥४३॥ सम्भवेन्न स्वतः ॥ ४४ ॥ आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ॥ ४५ ॥

तत्कर्मार्जितत्वात्तदर्थमपि चेष्टा लोकवत् ॥ ४६ ॥ समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥ ४७ ॥

भाष्यकारिका—लिङ्गदेहस्य घटकं यत्सप्तदशसंख्यकम् ॥ प्रधानकार्यं तत्सूक्ष्ममत्राध्यायेऽनुवर्णितम् ॥ २ ॥

इति श्रीकपिलमहर्षिप्रणीते साङ्ख्यप्रवचनदर्शने प्रधानकार्यप्रतिपादनं नाम द्वितीयोऽध्यायस्समाप्तः ॥ २ ॥

---

अविशेषाद्विशेषारम्भः ॥ १ ॥ तस्माच्छरीरस्य ॥ २ ॥ तद्बीजात् संसृतिः ॥ ३ ॥ अविवेकाच्च प्रवर्त्तनमविशे-

षाणाम् ॥ ४ ॥ उपभोगादितरस्य ॥ ५ ॥ सम्प्रति परिमुक्तो द्वाभ्याम् ॥ ६ ॥ मातापितृजं स्थूलं प्रायश इतरन्न तथा ॥ ७ ॥ पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य ॥ ८ ॥ सप्तदशैकं लिङ्गम् ॥ ९ ॥ व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥ तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः ११ न स्वातन्त्र्यात्तदृते छायावच्चित्रवच्च ॥ १२ ॥ मूर्तत्वेऽपि न सङ्घातयोगात्तरणिवत् ॥ १३ ॥ अणुपरिमाणं तत्कृतिश्रुतेः ॥ १४ ॥ तदन्नमयत्वश्रुतेश्च ॥ १५ ॥ पुरुषार्थं संसृ[1]-

१ महत्तिलिङ्गानामिति क्वचित्पाठः ।

तिलिङ्गानां सूपकारवद्राज्ञः ॥ १६ ॥
पाञ्चभौतिको देहः ॥ १७ ॥ चातुर्भौ-
तिकमित्येके ॥१८॥ एकभौतिकमि-
त्यपरे॥ १९ ॥ न सांसिद्धिकं चैतन्यं
प्रत्येकादृष्टे (:) ॥२०॥ प्रपञ्चमरणा-
द्यभावश्च ॥२१॥ मदशक्तिवच्चेत्प्रत्ये-
कपरिदृष्टे सांहत्ये तदुद्भवः ॥ २२ ॥
ज्ञानान्मुक्तिः ॥ २३ ॥ बन्धो विपर्य-
यात् ॥२४॥ नियतकारणत्वान्न समु-
च्चयविकल्पौ ॥ २५ ॥ स्वप्नजागरा-
भ्यामिव मायिकाऽमायिकाजागराभ्यां

नोभयोर्मुक्तिः पुरुषस्य ॥२६ ॥इतर-
स्यापि नात्यन्तिकम्॥२७॥सङ्कल्पि-
तेऽप्येवम् ॥ २८॥ भावनोपचयाच्छु-
द्धस्य सर्वं प्रकृतिवत् ॥ २९ ॥ रागो-
पहतिर्ध्यानम् ॥ ३० ॥ वृत्तिनिरोधा-
त्तत्सिद्धिः ॥ ३१ ॥ धारणासनस्व-
कर्मणा तत्सिद्धिः ॥ ३२ ॥ निरोध-
श्छर्दिविधारणाभ्याम् ॥ ३३ ॥स्थि-
रसुखमासनम् ॥३४॥स्वकर्म स्वाश्र-
मविहितकर्मानुष्ठानम् ॥ ३५ ॥ वैरा-
ग्यादभ्यासाच्च ॥ ३६ ॥ विपर्यय-
भेदाः पञ्च ॥ ३७॥ अशक्तिरष्टा-

विंशतिधा तु ॥ ३८ ॥ तुष्टिर्नवधा
॥ ३९ ॥ सिद्धिरष्टधा ॥ ४० ॥ अवा-
न्तरभेदाः पूर्ववत् ॥ ४१ ॥ एवमि-
तरस्याः ॥ ४२ ॥ आध्यात्मिकादि-
भेदान्नवधा तुष्टिः ॥ ४३ ॥ ऊहादिभिः
सिद्धिरष्टधा ॥ ४४ ॥ नेतरादितरहा-
नेन विना ॥ ४५ ॥ दैवादिप्रभेदाः[1]
॥ ४६ ॥ आब्रह्मस्तम्बपर्यन्तं तत्कृते
सृष्टिराविवेकात् ॥ ४७ ॥ ऊर्ध्वं सत्त्व-
विशाला ॥ ४८ ॥ तमोविशाला मूल-
तः ॥ ४९ ॥ मध्ये रजोविशा-

---

१ प्रभेदाः इति क्वचित्पाठः ।

ला ॥५० ॥ कर्मवैचित्र्यात्प्रधानचेष्टा गर्भदासवत् ॥ ५१ ॥ आवृत्तिस्त-त्राप्युत्तरोत्तरयोनियोगाद्धेयः ॥५२ ॥ समानं जरामरणादिजं दुःखम् ॥५३ ॥ न कारणलयात्कृतकृत्यतामग्नवदुत्था-नात् ॥५४॥ अकार्यत्वेऽपि तद्योगः पारवश्यात् ॥ ५५॥ स हि सर्ववित्स-र्वकर्त्ता ॥ ५६ ॥ ईदृशेश्वरासिद्धिस्सि-द्धा ॥५७॥ प्रधानसृष्टिःपरार्थं स्वतो-प्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत् ॥५८ ॥ अचेतनत्वोपि क्षीरवच्चेष्टितं प्रधानस्य ॥ ५९ ॥ कर्मवद्दृष्टेर्वा कालादेः

॥ ६० ॥ स्वाभावाच्चेष्टितमनाभिसन्धानाद्भृत्यवत् ॥ ६१ ॥ कर्माकृष्टेर्वाऽनादितः॥ ६२ ॥ विविक्तबोधात्सृष्टिनिवृत्तिः प्रधानस्य सूदवत्पाके ॥६३॥ इतर इतरवत्तद्दोषात् ॥ ६४॥ द्वयोरेकतरस्य वाप्यौदासीन्यमपवर्गः ॥६५॥ अन्यसृष्ट्युपरागेऽपि न विरज्यते प्रबुद्धरज्जुतत्त्वस्यैवोरगः ॥ ६६ ॥ कर्मनिमित्तयोगाच्च ॥ ६७ ॥ नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम्॥ ६८ नर्तकीवत्प्रवृत्तस्यापि निवृत्तिश्चारि-

१ निरपेक्षेपीति क्वचित्पुस्तके पाठः ।

तार्थ्यात् ॥६९॥ दोषबोधेऽपि नोप-
सर्पणं प्रधानस्य कुलवधूवत् ॥ ७०॥
नैकान्ततो बन्धमोक्षौ पुरुषस्य विवे-
कादृते ॥ ७१ ॥ प्रकृतेराञ्जस्यात्स-
संगत्वात्पशुवत् ॥ ७२ ॥ रूपैस्सप्त-
भिरात्मानं बध्नाति प्रधानं कोशका-
रवद्विमोचयत्येकरूपेण॥७३॥निमि-
त्तत्वमविवेकस्य न दृष्टहानिः ॥७४॥
तत्त्वाभ्यासान्नेति नेति त्यागाद्विवेक-
सिद्धिः ॥ ७५ ॥ अधिकारिभेदान्न
नियमः ॥ ७६ ॥ बाधितानुवृत्त्या

१ सहंगत्वादिति क्वचित्पुस्तके पाठः ।

मध्यविवेकतोऽप्युपभोगः[1] ॥ ७७ ॥ जीवन्मुक्तश्च ॥ ७८ ॥ उपदेश्योपदेष्टृत्वात्तत्सिद्धिः ॥ ७९ ॥ श्रुतिश्च ॥ ८० ॥ इतरथान्धपरम्परा ॥८१॥ चक्रभ्रमणवद्धृतशरीरः ॥८२॥ संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥ विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता[2] नेतरान्नेतरात् ॥ ८४ ॥

भाष्यकारिका— अत्यन्तलयपर्यन्तः कार्योऽभ्यासस्य नात्मनः ॥ मोक्ष एवं विवेकोऽत्र परवैराग्यसाधनम् ॥ ३ ॥

---

१ विवेकतोऽप्युपभोग इति क्वचित्पुस्तके पाठः ।
२ कृतकृत्यतेति क्वचित्पुस्तके पाठः ।

इति श्रीकपिलमहर्षिप्रणीते साङ्ख्यप्रव-चनदर्शने तृतीयोऽध्यायस्समाप्तः ॥ ३ ॥



राजपुत्रवत्तत्त्वोपदेशात् ॥ १ ॥ पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥ आवृत्तिरसकृदुपदेशात् ॥ ३ ॥ पितापुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥ श्येनवत्सुखदुःखी त्यागवियोगाभ्याम् ॥ ५ ॥ अहिनिर्ल्वयिनीवत् ॥ ६ ॥ छिन्नहस्तवद्वा ॥ ७ ॥ असाधनानुचिन्तनं बन्धाय भरतवत् ॥ ८ ॥ बहुभिर्योगे

२ चिन्तनव धाय वन्धत्वादीति क्वचित्पुस्तके पाठः ।

विरोधो रागादिभिः कुमारीशङ्खवत्[1] ॥ ॥ ९ ॥ द्वाभ्यामपि तथैव ॥ १० ॥ निराशस्सुखी पिङ्गलावत् ॥ ११ ॥ अनारम्भेऽपि परगृहे सुखी सर्पवत् १२॥ बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥१३॥ इषुकारवन्नैकचित्तस्य समाधिहानिः ॥१४॥ कृतनियमलंघनादानर्थक्यं लोकवत् ॥१५॥ तद्विस्मरणेऽपि भेकीवत् ॥ १६ ॥ नोपदेशश्रवणेपि कृतकृत्यता परामर्शादृते विरोचनवत् ॥ १७ ॥ दृष्टस्तयोरिन्द्र-

[1] कुमारीकङ्कणशङ्खेति क्वचित्पुस्तके पाठः ॥

स्य ॥१८॥ प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात्तद्वत् ॥ १९ ॥ न कालनियमो वामदेववत् ॥ २० ॥ अध्यस्तरूपोपासनात्पारम्पर्येण यज्ञोपासकानामिव॥२१॥ इतरलाभेऽप्यावृत्तिपञ्चाग्नियोगतो जन्मश्रुतेः ॥२२ ॥ विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥ २३ ॥ लब्धातिशययोगाद्वा तद्वत् ॥ २४॥ न कामचारित्वं रागोपहते शुकवत् ॥ २५ ॥ गुणयोगाद्बद्धः शुकवत् ॥ २६ ॥ न भोगाद्रागशान्तिर्मुनिवत् ॥ २७ ॥

दोषदर्शनादुभयोः ॥ २८ ॥ न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ॥२९॥ नाभासमात्रमपि मलिनदर्पणवत् ॥ ३० ॥ न तज्जस्यापि तद्रूपता पङ्कजवत् ॥ ३१ ॥ न भूतियोगेपि कृतकृत्यतोपास्यासिद्धिवदुपास्यसिद्धिवत् ॥ ३२ ॥

भाष्यकारिका—अध्यायत्रितयोक्तस्य विवेकस्यान्तरङ्गकम् ॥ आख्यायिकाभिस्संप्रोक्तमत्राध्याये समासतः ॥ ४ ॥

इति श्रीकपिलमहर्षिप्रणीते साङ्ख्यप्रवचनदर्शने चतुर्थोऽध्यायस्समाप्तः ॥ ४ ॥



मंगलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्चेति ॥ १ ॥ नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः ॥ २ ॥ स्वोपकारादधिष्ठानं लोकवत् ॥ ३ ॥ लौकिकेश्वरवदितरथा ॥ ४ ॥ पारिभाषिको वा ॥ ५ ॥ न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥ ६ ॥ तद्योगेऽपि न नित्यमुक्तः ॥ ७ ॥ प्रधानशक्तियोगाच्चेत्सङ्गापत्तिः ॥ ८ ॥ सत्तामात्राच्चेत्सर्वैश्वर्यम् ॥ ९ ॥ प्रमाणाभावान्न तत्सिद्धिः ।१०।सम्बन्धाभावान्नानुमानम् ।११।

श्रुतिरपि प्रधानकार्यत्वस्य ॥ १२ ॥ नाविद्याशक्तियोगो निस्संगस्य ॥ १३ ॥ तद्योगे तत्सिद्धावन्योन्याश्रयत्वम् ॥ १४ ॥ न बीजांकुरवत्सादिसंसारश्रुतेः ॥ १५ ॥ विद्यातोऽन्यत्वे ब्रह्मबाधप्रसंगः ॥१६ ॥ अबाधे नैष्फल्यम् ॥ १७ ॥ विद्याबाध्यत्वे जगतोऽप्येवम् ॥१८ ॥ तद्रूपत्वे सादित्वम् ॥ १९ ॥ न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥२०॥ श्रुतिलिंगादिभिस्तत्सिद्धिः ॥ २१ ॥ न नियमः प्रमाणान्तरावकाशात्।२२।

उभयत्राप्येवम् ॥ २३ ॥ अर्थात्सिद्धिश्चेत्समानमुभयोः ॥ २४ ॥ अन्तःकरणधर्मत्वं धर्मादीनाम् ॥२५॥ गुणादीनां च नात्यन्तबाधः ॥ २६ ॥ पञ्चावयवयोगात्सुखसंवित्तिः ॥२७॥ न सकृद्ग्रहणात्सम्बन्धासिद्धिः ॥२८॥ नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥ २९ ॥ न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥ निजशक्त्युद्भवमित्याचार्याः ॥ ३१ ॥ आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥ न स्वरूपशक्तिर्नियमः पुनर्वादप्रसक्तेः ।३३

विशेषणानर्थक्यप्रसक्तेः ॥ ३४ ॥ पल्लवादिष्वनुपपत्तेश्च ॥ ३५ ॥ आधेयशक्तिसिद्धौ निजशक्तियोगस्समानन्यायात् ॥ ३६ ॥ वाच्यवाचकभावस्सम्बन्धशब्दार्थयोः ॥ ३७ ॥ त्रिभिस्सम्बन्धासिद्धिः ॥ ३८ ॥ न कार्ये नियम उभयथा दर्शनात् ॥ ३९ ॥ लोके व्युत्पन्नस्य वेदार्थप्रतीतेः ॥ ४० ॥ न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्यातीन्द्रियत्वात् ॥ ४१ ॥ न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥ ४२ ॥

---

१ शब्दार्थयोरिति पाठः क्वचित्पुस्तके नास्ति।

निजशक्तिव्युत्पत्त्या व्यवच्छिद्यते ॥४३ ॥ योग्यायोग्येषु प्रतीतिजनकत्वात्तत्सिद्धिः ॥ ४४ ॥ न नित्यत्वं वेदानां कार्यत्वश्रुतेः ॥ ४५ ॥ न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात् ॥ ४६ ॥ मुक्तामुक्तयोरयोग्यत्वात् ॥ ४७ ॥ नापौरुषेयत्वान्नित्यत्वमंकुरादिवत् ॥ ४८ ॥ तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥ ४९ ॥ यस्मिन्नदृष्टेपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ॥ ५० ॥ निजशक्त्यभिव्यक्तेस्स्वतः प्रामाण्यम् ॥ ५१ ॥

नासतः ख्यानं नृशृंगवत् ॥ ५२ ॥ न सतो बाधदर्शनात् ॥ ५३ ॥ नानिर्वचनीयस्य तदभावात् ॥ ५४ ॥ नान्यथाख्यातिः स्ववचो व्याघातात् ॥ ५५ ॥ सदसत्ख्यातिर्बाधाऽबाधात्[1] ॥ ५६ ॥ प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकश्शब्दः ॥ ५७ ॥ न शब्दनित्यत्वं कार्यताप्रतीतेः ॥ ५८ ॥ पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥ ५९ ॥ सत्कार्यसिद्धान्तश्चेत्सिद्धसाधनम् ॥ ६० ॥ नाद्वैतमा-

१ बाधाबाधाभ्यामिति क्वचित्पुस्तके पाठः ।

त्मनो लिंगात्तद्भेदप्रतीतेः ॥ ६१ ॥
नानात्मनापि प्रत्यक्षबाधात् ॥ ६२॥
नोभाभ्यां तेनैव ॥ ६३ ॥ अन्यपर-
त्वमविवेकानां तत्र ॥ ६४ ॥ नात्मा
नाविद्या नोभयं जगदुपादानकारणं
निस्संगत्वात् ॥ ६५ ॥ नैकस्यानन्द-
चिद्रूपत्वे द्वयोर्भेदात् ॥ ६६ ॥ दुःख-
निवृत्तेर्गौणः ॥ ६७ ॥ विमुक्तिप्रशं-
सा मन्दानाम् ॥ ६८ ॥ न व्याप-
कत्वं मनसः करणत्वादिन्द्रियत्वाद्वा
॥ ६९ ॥ सक्रियत्वाद्गतिश्रुतेः ॥७०॥
न निर्भागत्वं तद्योगाद्घटवत् ॥ ७१ ॥

प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम् ॥ ७२ न भागलाभो भोगिनो निर्भागत्वश्रुतेः ॥ ७३ ॥ नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात् ॥ ७४ ॥ न विशेषगुणोच्छित्तिस्तद्वत् ॥ ७५ ॥ न विशेषगतिर्निष्क्रियस्य ॥ ७६ ॥ नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥ ७७ ॥ न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥ ७८ ॥ एवं शून्यमपि ॥ ७९ ॥ संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि ॥ ८० ॥ न भागियोगो भागस्य ॥ ८१ ॥ नाणिमादियोगो-

ऽप्यवश्यंभावित्वादुच्छित्तेरितरयोग-
वत् ॥ ८२ ॥ नेन्द्रादिपदयोगोऽपि
तद्वत् ॥ ८३ ॥ न भूतप्रकृतित्वमि-
न्द्रियाणामाहङ्कारिकत्वश्रुतेः॥ ८४ ॥
न षट्पदार्थनियमस्तद्बोधान्मुक्तिश्च
॥ ८५ ॥ षोडशादिष्वप्येवम् ॥८६॥
नाणुनित्यता तत्कार्यत्वश्रुतेः ॥८७॥
न निर्भागत्वं कार्यत्वात् ॥ ८८ ॥ न
रूपनिबन्धनात्प्रत्यक्षनियमः ॥८९॥

---

इदं सूत्रं न प्राचीनपुस्तके दृश्यते । भाष्येपर दृश्यते

न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात्॥ १० ॥ अनित्यत्वेपि स्थिरतायोगात्प्रत्यभिज्ञानं सामान्यस्य ।११।
न तदपलापस्तस्मात् ॥ १२ ॥ नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥१३॥
न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ॥ १४ ॥ निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात्तदुपलब्धेः॥ १५ ॥न संज्ञासंज्ञिसम्बन्धोऽपि॥१६॥ न सम्बन्धनित्यतोभयानित्यत्वात् ॥ १७ ॥
नाजंस्सम्बन्धो धार्मिग्राहकमानबाधा-

१ नात इति क्वचित्पुस्तके पाठः ।

त् ॥९८॥ न समवायोऽस्ति प्रमाणाभावात्॥ ९९ ॥ उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा ॥ १०० ॥ नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवापरोक्षप्रतीतेः ॥ १०१ ॥ न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् ॥ १०२ ॥ न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥ १०३ ॥नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेस्सर्वप्राप्तेर्वा॥ १०४। न तेजोऽपसर्पणात्तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः॥ १०५ ॥ प्राप्तार्थप्रकाशलि-

ङ्क्तृत्तिसिद्धिः ॥ १०६ ॥ भागगुणाभ्यां तत्त्वान्तरं वृत्तिस्सम्बन्धार्थं सर्पतीति॥ १०७ ॥न द्रव्यनियमस्तद्योगात् ॥ १०८ ॥ न देशभेदेऽप्यन्योपादानतास्मदादिवन्नियमः॥१०९॥ निमित्तव्यपदेशात्तद्व्यपदेशः ॥११०॥ ऊष्मजाण्डजजरायुजोद्भिज्जसाङ्कल्पिकसांसिद्धिकं चेति नियमः ॥१११॥ सर्वेषु पृथिव्युपादानमसाधारण्यात्तद्व्यपदेशः पूर्ववत् ॥ ११२ ॥ न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्त-

त्सिद्धः ॥ ११३ ॥ भोक्तुरधिष्ठाना-द्भोगायतननिर्माणमन्यथा पूतिभाव-प्रसङ्गात् ॥ ११४ ॥ भृत्यद्वारा स्वा-म्यधिष्ठितिर्नैकान्तात्[1] ॥ ११५ ॥ समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ॥ ११६ द्वयोस्सबीजमन्यत्र तद्धतिः ॥ ११७ ॥ द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु[2] द्वौ ॥ ॥ ११८ ॥ वासनया न स्वार्थख्या-पनं दोषयोगेपि न निमित्तस्य प्रधा-नबाधकत्वम् ॥ ११९ ॥ एकस्संस्कारः

---

१ नैकान्त्यादिति क्वाचित्पुस्तके पाठः । २ तुरहितः पाठः क्वाचित्पुस्तके ।

क्रियानिर्वर्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः ॥ १२० ॥ न बाह्यबुद्धिनियमो वृक्षगुल्मलतौषधिवनस्पतितृणवीरुदादीनामपि भोक्तृभोगायतनत्वं पूर्ववत् ॥१२१ ॥स्मृतेश्च ॥ १२२ ॥ न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥ १२३ ॥ त्रिधात्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥ १२४ ॥ न किञ्चिदप्यनुशयिनः ॥ १२५ ॥ न बुद्ध्यादिनित्यत्वमाश्रयविशेषेपि वह्निवत् ॥ १२६ ॥ आश्रयासिद्धेश्च । १२७।

१ च शब्दरहितः पाठः क्वचित्पुस्तके ।

**योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥१२८॥ न भूतचैतन्यं प्रत्येकादृष्टेस्सांहत्येऽपि च सांहत्येऽपि च ॥ १२९ ॥**

भाष्यकारिका--स्वसिद्धान्तविरुद्धार्थभाषिणो ये कुवादिनः ॥ पञ्चमे तान्निराकृत्य स्वसिद्धान्तो दृढीकृतः ॥ ५ ॥

इति श्रीकपिलमहर्षिप्रणीते साङ्ख्यप्रवचनदर्शने पञ्चमोऽध्यायस्समाप्तः ॥ ५ ॥



**अस्त्यात्मा नास्तित्वसाधनाभावात् ॥ १ ॥ देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् ॥ २ ॥ षष्ठीव्यपदेशादपि ॥ ३ ॥ न शिलापुत्रवद्धर्मिग्राहकमा-**

बाधात् ॥४ ॥ अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥ ५ ॥ यथा दुःखात्क्लेशः पुरुषस्य न तथा सुखादभिलाषः॥ ६॥ कुत्रापि कोऽपि सुखीति ॥ ७ ॥ तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः॥ ॥ ८ ॥ सुखलाभाभावादपुरुषार्थत्वमिति चेन्न द्वैविध्यात् ॥ ९ ॥ निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः ॥ १० ॥ परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ॥ ११ ॥ अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥ १२ ॥ न नित्यस्स्यादात्मवदन्यथा-

नुच्छित्तिः ॥ १३ ॥ प्रतिनियतका-
रणनाश्यत्वमस्य ध्वान्तवत् ॥ १४ ॥
अत्रापि प्रतिनियमोऽन्वयव्यतिरेका-
त् ॥ १५ ॥ प्रकारान्तरासम्भवा-
दविवेक एव बन्धः ॥ १६ ॥ न मु-
क्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः
॥ १७ ॥ अपुरुषार्थत्वमन्यथा ॥ १८ ॥
अविशेषापत्तिरुभयोः ॥ १९ ॥ त-
क्तिरन्तरायध्वस्तेर्न परा ॥ २० ॥ मु-
त्राप्यविरोधः ॥ २१ ॥ अधिकारित्रै-
विध्यान्न नियमः ॥ २२ ॥ दार्ढ्यार्थ-
मुत्तरेषाम् ॥ २३ ॥ स्थिरसुखमासन-

मिति न नियमः ॥ २४ ॥ ध्यानं निर्विषयं मनः ॥ २५ ॥ उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः ॥ २६ ॥ निस्सङ्गेऽप्युपरागो विवेकात् ॥ २७ ॥ जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः ॥ २८ ॥ ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ॥ २९ ॥ लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥ ३० ॥ न स्थाननियमश्चित्तप्रसादात् ॥ ३१ ॥ प्रकृतेराद्योपादानताऽन्येषां कार्यत्वश्रुतेः ॥ ३२ ॥ नित्यत्वेऽपि नात्मनो योग्यत्वाभा-

वात् ॥ ३३ ॥ श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥ ३४ ॥ पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ॥ ३५ ॥ सर्वत्र कार्यदर्शनाद्विभुत्वम् ॥ ३६ ॥ गतियोगेऽप्याद्यकारणताहानिरणुवत् ॥ ३७ ॥ प्रसिद्धाधिक्यं प्रधानस्य न नियमः ॥ ३८ ॥ सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥ ३९ ॥ अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ॥ ४० ॥ कर्मवैचित्र्यात्सृष्टिवैचित्र्यम् ॥ ४१ ॥ साम्यवैषम्याभ्यां कार्यद्वयम् ॥ ४२ ॥ विमुक्तबोधान्न सृष्टि-

प्रधानस्य लोकवत् ॥ ४३ ॥ नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात् ॥ ४४ ॥ पुरुषबहुत्वं व्यवस्थातः ॥ ४५ ॥ उपाधिश्चेत्तत्सिद्धौ पुनर्द्वैतम् ॥ ४६ ॥ द्वाभ्यामपि प्रमाणविरोधः ॥ ४७ ॥ द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ॥ ४८ ॥ प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः ॥ ४९ ॥ जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः ॥ ५० ॥ न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥ ५१ ॥ जगत्सत्यत्वमदुष्टकार-

णजन्यत्वाद्बाधकाभावात् ॥ ५२ ॥ प्र-
कारान्तरासम्भवात्सदुत्पत्तिः ॥ ५३ ॥
अहङ्कारः कर्त्ता न पुरुषः ॥ ५४ ॥
चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात्
॥ ५५ ॥ चन्द्रादिलोकेऽप्यावृत्तिर्नि-
मित्तसद्भावात् ॥ ५६ ॥ लोकस्य नो-
पदेशात्सिद्धिः पूर्ववत् ॥ ५७ ॥ पार-
म्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः ॥ ५८ ॥
गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियो-
गाद्भोगदेशकाललाभो व्योमवत् ॥ ५९ ॥
अनधिष्ठितस्य पूतिभावप्रसङ्गान्न त-
त्सिद्धिः ॥ ६० ॥ अदृष्टद्वारा चेद-



सम्बद्धस्य तदसम्भवाज्जलादिवदंकुरे
॥ ६१ ॥ निर्गुणत्वात्तदसम्भवादह-
ङ्कारधर्मा ह्येते ॥ ६२ ॥ विशिष्टस्य
जीवत्वमन्वयव्यतिरेकात् ॥ ६३ ॥
अहङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वरा-
धीना प्रमाणाभावात् ॥ ६४ ॥ अदृ-
ष्टोद्भूतिवत्समानत्वम् ॥ ६५ ॥ मह-
तोऽन्यत् ॥ ६६ ॥ कर्मनिमित्तः
प्रकृतेःस्वस्वामिभावोऽप्यनादिर्बीजांकु-
रवत् ॥ ६७ ॥ अविवेकनिमित्तो वा
पञ्चशिखः ॥ ६८ ॥ लिंगशरीरनिमि-
त्तक इति सनन्दनाचार्यः ॥ ६९ ॥

यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदु

च्छित्तिः पुरुषार्थः ॥ ७० ॥ ॥ ॐ

भाष्यकारिका–शास्त्रमुख्यार्थविस्तारस्तन्त्र

ख्येनुक्तपूरणैः ॥ षष्ठाध्याये कृतः पश्चाद्वाक्य

र्थश्चोपसंहृतः ॥ ६ ॥

इति श्रीकपिलमहर्षिप्रणीते साङ्ख्यप्र

चनदर्शने षष्ठोऽध्यायस्समाप्तः ॥ ६ ॥



## इति साङ्ख्यप्रवचनदर्शनं समाप्तम् ॥

२ इदं बृहत्साङ्ख्यप्रवचनदर्शनम् । यतो लघोरन्यस्यो पलम्भः । कर्तैक्यं तु वक्तुमशक्यमिति भाति ।



## अथ

## कापिलसाङ्ख्यसूत्राण्यारभ्यन्ते ।

अथातस्तत्त्वे समासः ॥ १ ॥ कथ

यामि अष्टौ प्रकृतयः ॥ २ ॥ षोडश

स्तु विकारः ॥ ३ ॥ पुरुषः ॥ ४ ॥

त्रैगुण्यम् ॥ ५ ॥ सञ्चरः प्रतिसञ्चरः

॥ ६ ॥ अध्यात्ममाधिभूतमधिदैवञ्च

॥ ७ ॥ पञ्चाभिबुद्धयः ॥ ८ ॥ पञ्च

कर्मयोनयः ॥ ९ ॥ पञ्च वायवः ॥ १० ॥

पञ्च कर्म्मात्मानः ॥ ११ ॥ पञ्च

पर्वा अविद्याः ॥ १२ ॥ अष्टाविंश-

तिधा अशक्तिः ॥ १३ ॥ नवध
तुष्टिः ॥ १४॥ अष्टधा सिद्धिः॥१५
दश मूलिकार्थाः॥॥ १६ ॥ अनुग्र
सर्गः ॥ १७ ॥ चतुर्दशविधो भूत
सर्गः ॥ १८ ॥ त्रिविधोबन्धः ॥१९
त्रिविधो मोक्षः ॥ २० ॥ त्रिवि
प्रमाणलक्षणम् ॥ २१ ॥ एतत्सम्यग
ज्ञात्वा कृतकृत्यः स्यान्न पुनस्त्रिविधे
दुःखेनानुभूयते[1] ॥ २२ ॥

इति कापिलसाङ्ख्यसूत्राणि समाप्तानि ।

## साङ्ख्यदर्शनं समाप्तम्.

१ इद लघुभूतम् । महतस्सर्वत्र प्रसिद्धत्वात् ।

श्रीरस्तु ।

श्रीमद्भगवत्पतञ्जलिना प्रणीतम् ।

# पातञ्जलयोगदर्शनम्

अथवा

## सेश्वरसाङ्ख्यप्रवचनम् ।

श्रीकृष्णदासात्मज-गङ्गाविष्णुना
स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९८२, शकाब्दाः १८४७.

कल्याण-मुंबई.

# योगशास्त्रीयविषयानुक्रमणिका.

सूत्रक्रमांकः

४५ चित्तग्राह्यसूक्ष्मावधिः ।

४६ अष्टसमापत्तयः सबीजसमाधिः ।

४७ निर्विचारसमापत्तिफलम् ।

४८ अध्यात्मप्रसाद् ऋतम्भरा ।

४९ ऋतम्भरा प्रज्ञान्तराद्विजातीया ।

५० ऋतम्भराप्रज्ञायाः फलम् ।

५१ तेन निर्बीजसमाधिसिद्धिः ।

इति प्रथमपादस्थविषयाः ।

(२)-१ चित्तशुद्धये उपायाः ।

२ क्रियायोगफलम् ।

३ तत्र क्लेशाः पञ्चधा ।

४ तेषु चतुर्णामविद्या मूलम् ।

५ " अविद्यालक्षणम् ।

इति द्वितीयपादस्थविषयाः ।

---

१८ संयमसाक्षात्कृतप्राक्तनसंस्कारफलानि०
१९ परचित्तसंयमफलानि०
२० परचित्तसंयमात्तदालम्बनज्ञानोत्पत्तिः ।
२१ अन्तर्धानसिद्धिफलकसंय०
२२ मरणारिष्टज्ञानफलकोपायानि०
२३ बलोत्पादकसंयमानि०
२४ तत्तद्बलानां स्वस्मिन्प्रादुर्भावप्रकारानि०
२५ सूक्ष्म–व्यवहित–विप्रकृष्ट–वस्तुज्ञानफ-
लकसंयमानि०
२६ चतुर्दशभुवनसाक्षात्कारफलकसंय०
२७ नक्षत्रसन्निवेशसाक्षात्कारफलकसंय०
२८ तारागतिज्ञानफलकसंय०
२९ कायसन्निवेशादिज्ञानफलकसंय०
३० क्षुत्पिपासानिवृत्तिफलकसंय०

इति तृतीयपादस्थविषयाः ।

(४)-१ पञ्चविधासिद्धिनिरूपणम् ।

२ जन्मान्तरार्जितस्याप्येतज्जन्माहेतुत्वानि०

३ आवरकभङ्गःन प्रकृतिपरिणामे कारणम् ।

४ योगिधृतानेकशरीरेष्वनेकचित्तसम्बन्धे युक्तिः ।

५ निर्मितानेकचित्तानां स्वानुकूलत्वे हेतुनि०

६ पञ्चविधासिद्धिमच्चित्तेष्वपवर्गयोग्यचित्तनि०

७ योगिचित्तवद्योगिकर्मणामपि वैलक्षण्यम् ।

८तत्तत्कर्मणां तत्तदनुकूलवासनारम्भकत्वानि०

१० जन्मान्तरास्तित्वानि०

११ वासनानामनादित्वेपि हानम् ।

१२ सतां संस्काराणामभावस्वरूपनि०

१४ गुणत्रयजन्यानामेकत्वे हेतुनि०

इति तुरीयपादस्थाविषयाः ।

इति विषयानुक्रमाणिका समाप्ता ।





श्रीगणेशाय नमः ॥

अथ

# पातञ्जलयोगदर्शनम् ॥

## तत्र—समाधिपादः ॥ १ ॥

अथ योगानुशासनम् ॥ १ ॥ योगश्चित्तवृत्तिनिरोधः ॥ २ ॥ तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥ वृत्तिसारूप्यमितरत्र ॥ ४ ॥ वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ५ ॥ प्रमाणविपर्यय

विकल्पनिद्रास्मृतयः ॥ ६ ॥ प्रत्यक्षाऽनुमानाऽऽगमाः प्रमाणानि ॥ ७ ॥ विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥ अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥ अनुभूतविषयाऽसम्प्रमोषः स्मृतिः ॥ ११ ॥ अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥ तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥ स तु दीर्घकालनैरन्तर्यसत्काराऽऽसेवितो दृढभूमिः ॥ १४ ॥ दृष्टाऽऽनुश्रविकावि-

षयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥ तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥ वितर्कविचारानन्दास्मितारूपानुगमात्सम्प्रज्ञातः ॥१७॥ विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः॥ १८ ॥भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥ श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥२०॥ तीव्रसंवेगानामासन्नः ॥ २१ ॥ मृदुमध्याऽधिमात्रत्वात्ततोऽपि विशेषः।२२ ईश्वरप्रणिधानाद्वा ॥ २३ ॥ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष-

ईश्वरः ॥२४॥ तत्र निरतिशयं सर्वज्ञ-
बीजम् ॥ २५ ॥ (स एष) पूर्वेषा-
मपि गुरुः कालेनाऽनवच्छेदात् ॥२६॥
तस्य वाचकः प्रणवः ॥ २७ ॥ तज्ज-
पस्तदर्थभावनम् ॥ २८ ॥ ततः
प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभाव-
श्च ॥ २९ ॥ व्याधिस्त्यानसंशय-
प्रमादालस्याविरतिभ्रान्तिदर्शनालब्ध-
भूमिकत्वानवस्थितत्वानि चित्तवि-
क्षेपास्तेऽन्तरायाः ॥ ३० ॥ दुःख-

---

१ 'स एष' इति भोजराजमार्तण्डटीकानुसारेणाधिके द्वे पदे पठ्येते।

दौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासाविक्षेपसहभुवः ॥ ३१ ॥ तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥ मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥ प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥ विषयवती वा प्रवृत्तिरुत्पन्ना मनसःस्थितिनिबन्धनी ॥ ३५ ॥ विशोका वा ज्योतिष्मती ॥ ३६ ॥ वीतरागविषयं वा चित्तम् ॥ ३७ ॥ स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥ यथाऽभिमतध्याना-

द्रा ॥३९॥ परमाणुपरममहत्त्वान्तो ऽस्य वशीकारः ॥ ४० ॥ क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥ तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का संमापत्तिः[1] ॥ ४२॥ स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥ एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥ सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥ ता एव

---

१ समापत्तिरिति नास्ति राजमार्तण्डभोजवृत्त्योर्मूले ।

सबीजः समाधिः ॥४६॥ निर्विचारवै-
शारद्येऽध्यात्मप्रसादः ॥ ४७ ॥
ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥ श्रुता-
नुमानप्रज्ञाभ्यामन्यविषया विशेषार्थ-
त्वात् ॥ ४९ ॥ तज्जः संस्कारोऽ
न्यसंस्कारप्रतिबन्धी ॥५०॥ तस्या-
पि निरोधे सर्व (वृत्ति) निरोधान्नि-
र्बीज समाधिः ॥ ५१ ॥

इति श्रीपातञ्जले योगशास्त्रे (समाधिनि-
र्देशो नाम) प्रथमः पादः ॥ १ ॥

---

(१) वृत्तीति राजमार्तण्डाभोजवृत्त्योरनुसारेणाधिकं पठ्यते ।

साधनपादः ॥ २ ॥

तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥ समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥ अविद्याऽस्मितारागद्वेषाभिनिवेशाः (पञ्च[1]) क्लेशाः ॥ ३ ॥ अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥ अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥ दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥ सुखानुशयी रागः ॥ ७ ॥ दुःखानुशयी द्वेषः ॥ ८ ॥ स्व-

१ पञ्चेति नास्ति विज्ञानभिक्षुमते ।

रसवाही विदुषोऽपि तथारूढोऽभि-
निवेशः ॥ ९॥ ते प्रतिप्रसवहेयाः सू-
क्ष्माः ॥ १० ॥ ध्यानहेयास्तद्वृत्तयः
॥ ११ ॥ क्लेशमूलः कर्माऽऽशयो दृष्टा-
ऽदृष्टजन्मवेदनीयः ॥ १२॥ सति मूले
तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥
ते ह्लादपरितापफलाः पुण्यापुण्यहे-
तुत्वात् ॥ १४ ॥ परिणामतापसंस्का-
रदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव स-
र्वं विवेकिनः ॥ १५ ॥ हेयं दुःखम-
नागतम् ॥ १६ ॥ द्रष्टृदृश्ययोः संयोगो

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥ प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥ विशेषाऽविशेषलिङ्गमात्राऽलिङ्गानि गुणपर्वाणि ॥ १९ ॥ द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययाऽनुपश्यः ॥ २० ॥ तदर्थ एव दृश्यस्याऽऽत्मा ॥ २१ ॥ कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥ स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥ तस्य हेतुरविद्या ॥ २४ ॥ तदभावात्संयोगाऽभावो हानं तद्दृशेः कैवल्यम् ॥ २५ ॥ विवे-

कख्यातिरविप्लवा हानोपायः ॥ २६ ॥ तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥२७॥ योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥२८ ॥ यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावंगानि ॥ २९ ॥ अहिंसा[1]सत्या[2]स्तेयब्रह्मचर्याऽपरिग्रहाः यमाः ॥ ३० ॥(एते[3]) जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥ शौचसन्तोषतपस्स्वा-

१ क. अहिंसेति ' पृथक् पदम् ' । २ ग. सत्यमस्ते
३ ' एते ' इति पदमाधिकं राजमार्तण्डभोजवृत्त्योर्मूले ।

ध्यायेश्वरप्रणिधानानि नियमाः॥३२॥
वितर्कबाधने प्रतिपक्षभावनम्॥३३॥
वितर्का हिंसादयः कृतकारितानु-
मोदिता लोभक्रोधमोहपूर्वका मृदुम-
ध्याऽधिमात्रा दुःखाऽज्ञानाऽनन्तफ-
ला इति प्रतिपक्षभावनम् ॥ ३४ ॥
अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्या-
गः ॥ ३५ ॥ सत्यप्रतिष्ठायां क्रिया-
फलाऽऽश्रयत्वम् ॥ ३६ ॥ अस्तेय-
प्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥
ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥३८॥

अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः ॥ ३९ ॥ शौचात्स्वाङ्ग[1]जुगुप्सा परैरसंसर्गः ॥ ४० ॥ सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयाऽऽत्मदर्शनयोग्यत्वानि च ॥ ४१ ॥ सन्तोषादनुत्तमसुखलाभः ॥ ४२ ॥ कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥ स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥ समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥ [2]स्थिरसुखमासनम् ॥ ४६ ॥ प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥

---

१ क. त्स्वांगे जुगुप्सा । २ क. तन्नास्थि० ।

ततो द्वन्द्वाऽनभिघातः ॥ ४८ ॥
तस्मिन्सति श्वासप्रश्वासयोर्गतिवि-
च्छेदः प्राणायामः ॥ ४९ ॥
( सं तु ) बाह्याभ्यन्तरस्तम्भवृत्तिर्देश-
कालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः
॥ ५० ॥ बाह्याभ्यन्तरविषयाक्षेपी
चतुर्थः ॥५१ ॥ततः क्षीयते प्रकाशा-
वरणम् ॥ ५२ ॥ धारणासु च यो-
ग्यता मनसः ॥ ५३ ॥ स्वविषयास-
म्प्रयोगचित्तस्य स्वरूपाऽनुकार इवे-
न्द्रियाणां प्रत्याहारः ॥ ५४ ॥ ततः

१ 'सतु' इति पदद्वयमाधिकं भोजवृत्तिराजमातार्ण्ड-योमूले ।

परमावश्यतेन्द्रियाणाम् ॥ ५५ ॥

इति श्रीपातञ्जले योगशास्त्रे (साधननिर्देशो नाम) द्वितीयः पादः ॥ २ ॥

---

विभूतिपादः ॥ ३ ॥

देशबन्धश्चित्तस्य धारणा ॥ १ ॥ तत्र प्रत्ययैकतानता धारणा ॥ २० ॥ तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥ त्रयमेकत्र संयमः॥४॥ तज्जयात्प्रज्ञाऽऽलोकः॥५॥ तस्य भूमिषु विनियोगः ॥ ६ ॥ त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥ तदपि बहिरङ्गं निर्बीजस्य॥ ८ ॥ व्युत्थानि-

रोधसंस्कारयोरभिभवप्रादुर्भावो निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥ तस्य प्रशान्तवाहिता संस्कारात् ॥ १०॥ सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११॥ततः[1] पुनःशान्तोदितो तुल्यप्रत्ययो चित्तस्यैकाग्रतापरिणामः॥ १२॥ एतेन भूतेन्द्रियेषु धर्मलक्षणाऽवस्थापरिणामा व्याख्याताः॥ १३॥शान्तोदिता व्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥ क्रमान्यत्वं परिणामाऽन्यत्वे

१ ततः पुनारीति रन्जमार्तण्डभोजवृत्तिमूलादौ नास्ति

हेतुः ॥ १५॥ परिणामत्रयसंयमादतीतानागतज्ञानम् ॥१६॥ शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥१७॥ संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥१८॥प्रत्ययस्य परचित्तज्ञानम्।१९। न च तत्साऽऽलम्बनं तस्या विषयीभूतत्वात्॥२०॥कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्धानम् ॥ २१ ॥सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञान-

२ इदं भाष्यमेव. न सूत्रमिति विज्ञानभिक्षुः ।

नजयाज्ज्वलनम् ॥ ४० ॥ श्रोत्राका-
शयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम्
॥ ४१ ॥ कायाकाशयोः सम्बन्धसं-
यमाल्लघुतूलसमापत्तेश्चाकाशगमनम्
॥ ४२ ॥ बहिरकल्पिता वृत्तिर्महावि-
देहा ततः प्रकाशाऽऽवरणक्षयः ४३॥
स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमा-
द्भूतजयः ॥ ४४ ॥ ततोऽणिमादिप्रा-
दुर्भावः कायसम्पत्तद्धर्मानभिघातश्च
॥ ४५ ॥ रूपलावण्यबलवज्रसंहनन-
त्वानि कायसम्पत् ॥ ४६ ॥ ग्रहण-

स्वरूपामितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥ ततो मनोजयित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥ सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥ तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५० ॥ स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५१ ॥ क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५२ ॥ जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥ तारकं सर्वविषयं सर्वथा विषयमक्रमं

चेति विवेकजं ज्ञानम् ॥ ५४ ॥ सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति[1] ॥ ५५ ॥

इति श्रीपातञ्जल योगशास्त्रे (विभूतिनिर्देशो नाम) तृतीयः पादः ॥ ३ ॥

## कैवल्यपादः ॥ ४ ॥

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥ जात्यन्तरपरिणामः प्रकृत्या (ऽऽ)पूरात् ॥ २ ॥ निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥ निर्माणचित्तान्यस्मि-

[1] इतिशब्दो राजमार्तण्डभोजवृत्त्योर्मूले नास्ति ।

तामात्रात् ॥ ४ ॥ प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥ तत्र ध्यानजमनाशयम् ॥ ६ ॥ कर्माऽशुक्लाऽकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥ ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥ जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥ तासामनादित्वं चाशिषो नित्यत्वात् ॥ १० ॥ हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥११ अतीतानागतं स्वरूपतोऽस्त्यध्वभेदा

द्धर्माणाम् ॥ १२ ॥ ते व्यक्तसूक्ष्मा
गुणात्मानः ॥ १३ ॥ परिणामैक-
त्वाद्वस्तुतत्त्वम् ॥ १४ ॥ वस्तुसाम्ये
चित्तभेदात्तयोर्विविक्तः पन्थाः॥१५॥
न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं
तदा किं स्यात् ॥१६॥ तदुपरागापे-
क्षित्वाच्चित्तस्य वस्तुज्ञाताज्ञातम्
॥ १७ ॥ सदा ज्ञाताश्चित्तवृत्तयस्त-
त्प्रभोः पुरुषस्याऽपरिणामित्वात्
॥ १८ ॥ न तत्स्वाभासं दृश्यत्वात्
॥ १९ ॥ एकसमये चोभयानवधा-
रणम्॥ २० ॥ चित्तान्तरदृश्ये बुद्धि-

बुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ॥२१॥ चित्तेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥ द्रष्टृदृश्योपरक्तंचित्तं सर्वार्थम् ॥ २३ ॥ तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥२४॥ विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥ तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥ तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥२७ ॥ हानमेषां क्लेशवदुक्तम् ॥ २८ ॥ प्रसंख्यानेप्यकुसीदस्य सर्वथा विवेक-

ख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥ ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥ तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१॥ ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥ क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥ पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥३४ ॥

इति श्रीपातञ्जले योगशास्त्रे (कैवल्यनिरूपणं नाम) तुरीयः पादः ॥ ४ ॥

पादचतुष्टयसूत्राणां समष्टिसंख्या- १९५ ॥

## पादार्थसंग्रहः ॥

योगस्योद्देशनिर्देश स्तदर्थं वृत्तिलक्षणम् । योगोपायाः प्रभेदाश्च(१)—पादेस्मिन्नुपवर्णिताः ॥१॥ क्रियायोगं जगौ क्लेशान्विपाकान्कर्मणामिह । तद्दुःखत्वं तथा व्यूहान् ( २ )—पादे योगस्य पञ्चकम् ॥ २ ॥—( ३ )—अत्रान्तरङ्गाण्यङ्गानि परिणामाः प्रपञ्चिताः । संयमाद्भूतिसंयोगस्तासु ज्ञानं विवेकजम् ॥ ३ ॥ मुक्त्यर्हचित्तं परलोकमेयज्ञसिद्धयो धर्मघनः समाधिः । द्वयीच मुक्तिः प्रतिपादितास्मिन् ( ४ )—पादे प्रसङ्गादपि चान्यदुक्तम् ॥ ४ ॥

## योगशास्त्रार्थसंग्रहः ॥

निदानं तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि ।
कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरो
विविक्तं कैवल्यं परिगलिततापा चितिरसौ ॥

इति समाप्तं योगदर्शनम् ॥

पुस्तक मिलनेका ठिकाना-

गङ्गाविष्णु श्रीकृष्णदास, "लक्ष्मीवेङ्कटेश्वर" स्टीम्, प्रेस, कल्याण-मुंबई.

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्, प्रेस, खेतवाडी-मुंबई.